॥ श्रीः ॥

हरिजीवनदास संस्कृत ग्रन्थमाला ३

# काव्यालङ्कारसूत्राणि

## स्वोपज्ञवृत्तिसहितानि

'कला' 'अविकला' संस्कृत-हिन्दीव्याख्योपेतानि

( गुणविवेचनं नाम तृतीयमधिकरणम् )




चौखम्बा अमरभारती प्रकाशन

पत्रमञ्जूषासङ्ख्या ११३८

वाराणसी-२२१००१ ( भारत )

॥ श्री ॥

# हरजीवनदास संस्कृत ग्रन्थमाला

३६



श्रीमद्वामनाचार्यविरचितानि

# काव्यालङ्कारसूत्राणि

## स्वोपज्ञवृत्तिसहितानि

'कला' 'प्रतिकला' संस्कृत-हिन्दीव्याख्योपेतानि

व्याख्याकारः

श्री लोकमणिदाहालः

( गुणविवेचनं नाम तृतीयमधिकरणम् )




चौखम्बा अमरभारती प्रकाशन

पत्रमञ्जूषासङ्ख्या ११३८

वाराणसी-२२१००१ ( भारत )

प्रकाशक
चौखम्बा अमरभारती प्रकाशन
पत्रमञ्जूषा ११३८
के० ३७/१३०, गोपाल मन्दिर लेन
वाराणसी–२२१००१
फोन : ६४०४१



प्रथम संस्करण, सन् १९८५ ई०
विक्रम सं० २०४२
मूल्य रु०



अन्यप्राप्तिस्थानम्
चौखम्बा संस्कृत पुस्तकालय
कचौड़ी गली
वाराणसी २२१००१ ( भारत )

मुद्रक—विद्याविलास प्रेस, गोपाल मन्दिर लेन, वाराणसी–२२१००१

# समर्पण

विद्यानुरागी, संस्कृत के दुर्लभ ग्रन्थरत्नों के उद्धारक अत एव
भगवती सरस्वती के परम अनुकम्पनीय, राष्ट्रहित में
संलग्न एवं गीर्वाणवाणी के उपासक विद्वानों
के अतीव उपकारक विश्वविख्यात
चौखम्बा अमरभारती प्रकाशन
के अध्यक्ष

**गोलोक० श्री हरजीवनदास जी गुप्त**

की

पुण्यस्मृति में उन्हीं को यह सादर
सप्रेम एवं श्रद्धा के साथ
समर्पित

सेवक
प्रकाशक

# किञ्चित्प्रास्ताविकम्

"अलङ्कारास्त्वलङ्कारा गुणा एव गुणाः सदा"

## प्राक्कथनम्—

ह्लादैकमयस्य नवरसरुचिरस्य काव्यस्यालौकिकस्य शब्दार्थौ शरीरञ्चेत् गुणाः शौर्यादिवदिति प्रायशः सर्वसम्मतमेव। आभरताज्जगन्नाथपर्यन्तमुच्चावचरूपेणापि गुणाः काव्यस्यावश्यकधर्मत्वेन चर्चिता इति न विवादास्पदम्। किञ्च रसादिः काव्यस्यात्मरूपेण स्वीकृतो गुणास्तदुत्कर्षाधायकत्वेनोपस्थापिता दृश्यन्ते। येषु केष्वपि प्रस्थानेषु गुणानामुपयोगिता नैवोपेक्षिता। किञ्च काव्यं न केवलं लौकिककर्मविशेषादपितु विधिव्यापकसर्गादपि व्यतिरिच्यतेऽतएव तस्य गुणा अपि लौकिकेतरा एव भवन्ति हि। गुणादानादेव काव्यसौन्दर्यं विशिष्टं भवति। यथाऽङ्गनायाः लावण्यं नाङ्गविशेषगतमपि तदतिरिक्तं तेषां संयुक्तशक्तिः पूर्णपरिणामश्च तथैव गुणा अपि काव्यस्य लावण्यम्। न केवलं गुणैरेव काव्यत्वं न च तद्विरहितेऽपि। काव्ये पञ्चषाणि ततो वाऽप्यपराणि प्रस्थानानि सन्ति तेषु रस-अलङ्कार-रीति-ध्वनि-वक्रोक्ति औचित्यादीनि समुल्लेखनीयानि। प्रत्येकं प्रस्थानं स्वकीयपक्षं सर्वोपरि स्थापयति किन्तु गुणास्तु न्यूनाधिकसङ्ख्यया सर्वेषां सम्मता एव।

## के च ते गुणाः—

भरतमुनिर्गुणं परिभाषयति—'एते एव विपर्यस्ता गुणा काव्येषु कीर्तिताः' इति अर्थात् दोषविपर्यस्ता गुणा इति। वामनो यथा—काव्यशोभायाः कर्तारो धर्मा गुणाः, पूर्वे नित्याः—काव्यशोभाधायकनित्यधर्माः गुणा इति। मम्मटस्त्वाह "ये रसस्याऽङ्गिनो धर्माः शौर्यादय इवात्मनः। उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः" इति—ये अङ्गिनः काव्यात्मभूतस्य रसस्य उत्कर्षहेतवः अतिशयाधायकाः अचलस्थितयः नियतरूपेण स्थिताः अपृथक्स्थियो

नित्याः रसविशेषनियतविशेषाः आत्मनः शौर्यादयः इव धर्माः स्वरूपविशेषाः गुणाः इति। तथाभूते सति 'रसोत्कर्षहेतुत्वे सति रसधर्मत्वं गुणलक्षणम्' इति अथवा 'तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः' इति। यद्वा—रसधर्मत्वे सति रसोत्कर्षकत्वं तथाभूते सति तदव्यभिचारित्वम् अव्यभिचारेण तदुपकारकत्वं गुणत्वमिति। विद्यानाथोऽप्याह—"गुणाः काव्यप्रकाशकाः" इति—संघटनाश्रयत्वे सति चारुताहेतवो गुणाः इति कुमारस्वामी। दोषपरिहारकत्वेन उत्कर्षहेतुत्वाच्च गुणत्वमिति। विश्वनाथो यथा—'रसस्याङ्गित्वमाप्तस्य धर्माः शौर्यादयो यथा। गुणाः' इति। जयदेवो यथा—अमी दशगुणाः काव्ये पुंसि शौर्यादयो यथा' इति।

गुणविषये विचारः—

गुणविषये द्विविधा निष्ठा लभ्यते केषाञ्चित्तु दोषपरिहारकत्वेन गुणत्वं ते च सौकुमार्यादयः, यथा श्रुतिकटुदोषपरिहाराय सौकुमार्यं ग्राम्यदोषपरिहाराय कान्तिः, अपुष्टार्थनिराकरणाय अर्थव्यक्तिः, न्यूनाधिकपदनिराकरणाय सम्मितत्वम्, अनुचितार्थपरिहाराय उदात्तता, विसन्धिपरिहाराय और्जित्यम्, पतत्प्रकर्षपरिहाराय रीतिः, क्लिष्टतापरिहाराय प्रसादः, अश्लीलतारिहारायोक्तिः, च्युतसंस्कारपरिहाराय सौशब्द्यम्, प्रक्रमभङ्ग निराकरणाय समता, परुषतापरिहाराय प्रेयान्। केषाञ्चित्तु स्वत एवोत्कर्षहेतुत्वाद्गुणत्वम्। तथैव गुणानां नित्यधर्मत्वे न कोऽपि विवादः किन्तु तदाश्रयत्वे मतभिन्नता दृश्यते। 'वर्णादीनामेव धर्माः गुणाः' इति वामनीयाः। तद्यथा—रीतिरात्मा काव्यस्य, विशिष्टपदरचना रीतिः, विशेषो गुणात्मा इति ओजः-प्रसादादयो बन्धगुणाः, त एवार्थगुणाः इत्यपि। गुणास्तु रसधर्मा इति मम्मटादयः। शब्दार्थौ तु काव्यस्य शरीरमेव। तत्तु नैव चेतनम्, अचेतनस्य शरीरस्य कथं गुणसम्भवः। काव्यस्यात्मा तु रस एव तेन गुणा रसाश्रिता भवन्ति। तेनैवोक्तम्—"ये रसस्याऽङ्गिनो धर्माः शौर्यादय इवात्मनः। उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणा" इति। गुणाः रसं विना नैवावतिष्ठन्ते अवस्थिताश्च अश्यमेव रसमुपकुर्वन्ति इति तेषां मतम्। गुणानां शब्दार्थवृत्तिस्तु आकारे शौर्यस्य इव उपचारेणैव। यथोक्तम्—गुणवृत्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता' इति ( का० प्र० ८।७१ )।

गुणानां सङ्ख्या—

भरतमुनिर्गुणान्दश परिगणयति । तद्यथा—

"श्लेषः प्रसादः समता समाधिर्माधुर्यमोजः पदसौकुमार्यम् । अर्थस्य व्यक्तिरुदारता च कान्तिश्च काव्यस्य गुणा दशैते" ( नाट्यसूत्रम् १७।९६ )

अग्निपुराणे श्लेष-लालित्य-गाम्भीर्यो-दारता-सती-यौगिकीति शब्दगुणाः प्रसाद-सौभाग्य-यथासङ्ख्यप्रशस्यता-पाक-रागेतिशब्दार्थोभयगुणा उक्ताः । भामहाचार्यस्तु त्रीनेव गुणान्प्रसादौजोमाधुर्यान्निर्दिशति । ( भामहालङ्कारः (२।१-३), दण्डी श्लेषादीन्-दशगुणान्परिगणयति । (काव्यादर्शः १०।४१-४२), वामनो दशगुणान्विवेचयति श्लेषादीन् ( का० सू० ३।१।४ )। भोजराजस्तु शब्दार्थोभयगतान् श्लेषादींश्चतुर्विंशतिगुणान्निर्दिशति । मम्मटस्त्रीनेव गुणान् रसगतान्मन्यते । यथोक्तम्—"माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश ( का० प्र० ८।३ ) । सामाजिकानां चित्तेषु नवरसीजन्या द्रुतिर्विस्तारो विकासश्चेति तिस्रोऽवस्थाः भवन्ति । तत्र माधुर्यं द्रुतिः सा च शृङ्गारकरुणशान्तेभ्यः, ओजो विस्तारः स च वीरबीभत्सरौद्रेभ्यः, प्रसादो विकासः स च हास्याद्भुतभयानकेभ्यः इति गुणानां त्रिविधत्वम् । उक्तञ्च—'केचिदन्तर्भवन्त्येषु दोषत्यागात्परे स्थिताः । अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततो दश' इति । यथा दीप्त्यात्मविस्तृतिहेतुत्वात् श्लेष-समाध्यु-उदारता-प्रसादानामोजस्यन्तर्भावः । केचित्तु दोषाभावरूपत्वेनाश्रिताः । केचिदौचित्यमात्रपर्यवसिता इति तेषां त्रिधात्वम । विद्यानाथो भोजराज-मनुसृत्य चतुर्विंशतिगुणान्निर्वर्णयति । ते च यथा—"श्लेषः प्रसादः समता माधुर्यं सुकुमारता । अर्थव्यक्तिरुदारत्वन्तथा कान्तिरुदात्तता । ओजः सुशब्दता प्रेयानौर्जित्यमथ विस्तरः । समाधिः सौक्ष्म्यगाम्भीर्ये सक्षेपो भाविक-न्तथा । सम्भितत्वन्तथा प्रौढी रीतिरुक्तिर्गतिस्तथा । चतुर्विंशतिरेते स्युर्गुणाः काव्यप्रकाशकाः । ( प्र० रु०, गु० प्र० १—३ )। विश्वनाथोऽपि मम्मट-मेवानुसृत्य माधुर्योजःप्रसादाख्यांस्त्रीन् गुणानेव निर्दिशति यथोक्तम—"माधुर्यमोजोऽथ प्रसाद इति ते त्रिधा" इति । जगन्नाथोऽपि त्रीनेव गुणा-न्समर्थयति किन्तु गुणान् न केवलं रसमात्रधर्मानपितु शब्दार्थगताननापि निर्दिशति । यथोक्तम्—किञ्चात्मनो निर्गुणतयाऽऽत्मरूपरसगुणत्वं माधुर्या-

दीनामनुपपन्नम। तथा च शब्दार्थयोरपि माधुर्यादेरीदृशस्य सत्वादुपचारो नैव कल्प्यः प्रयोजकत्वञ्च अदृष्टादिविलक्षणंशद्वार्थरसरचनागतमेव ग्राह्य-मतो न व्यवहारातिप्रसक्तिः । रं० ग० ।

**वामनस्य वैशिष्टचम्—**

वामनः प्रथमः आचार्यो यो गुणानलङ्कारेभ्य उन्नमय्य तान् पृथग्रूपेण व्यवेचयत्। वामनात्पूर्वं गुणा अपि रीत्यलङ्कारवच्छरीरशोभाधायकत्वेन गृहीता आसन्। गुणान् काव्यशोभाधायकनित्यधर्मत्वेनालङ्कारानित्य-धर्मत्वेन व्याकरोत्। गुणात्मा पदरचना एव काव्यस्यात्मा इति परिभाव्य गुणानामात्मधर्मत्वं प्रथमं तेनैव प्रतिपादितम्। स एव सर्वप्रथमं गुणानपि तेनैव नाम्ना किन्तु पृथक्पृथग्लक्षणेन निर्दिश्य तान्बन्धगतार्थगतभेदेन यिभाज्य सोदाहरणं प्रस्तुतवन्।

गुणालङ्कारयोः पार्थक्यम्, गुणानां काव्यशोभाधायकनित्यधर्मत्वेन अलङ्काराणांस्तदतिशयहेतुभूतानित्यधर्मत्वेन निरूपणम् रीतेस्त्रैविध्यम्, वक्रोक्तेर्लक्षणारूपता, विशेषोक्तेर्लक्षणवैचित्र्यम्, अर्थालङ्कारप्रपञ्चस्योपमा-रूपत्वसिद्धिरिति केचन वामनप्रतिपादितसिद्धान्ताः सन्ति। वामनेनैव प्रथममुक्तं यत् गुणानां काव्यात्मतया गुणहीनस्य नैव काव्यत्वमपितु अतिशयाधायकानित्यधर्मत्वादलङ्काराणामुपस्थितिर्वाञ्छनीया, किन्तु नैवा-निवार्या इति प्रतिपादितम्। मम्मटस्य "तददोषौ शब्दार्थौ सगुणावन-लङ्कृती: पुनः क्वापि" "इति कथनस्येयमेवाधारभूमिः यमालम्ब्य विश्वनाथः 'तदभावस्य दोषत्वात्' इत्युक्त्वा गुणानामनिवार्यतां स्वीकरोति।

इदमप्यपरं वामनस्य वैशिष्टचं यत्केवलं वाह्यसाधनभूतालङ्कार-सामान्यभेदरूपेणाङ्गीकृतं रसम् 'दीप्तरसत्वं कान्तिः (३।२।१५)—दीप्ता रसाः शृङ्गारादयो यस्य स दीप्तरसस्तस्य रसो दीप्तरसत्वं कान्तिः" इति प्रतिपाद्य काव्यात्मभूतगुणेषु समावेश्य तस्य काव्यात्मत्वं प्रतिष्ठापितं यमवलम्ब्यापरवर्तिनो विश्वनाथादयो रसं काव्यात्मरूपेण प्रतिष्ठापितवन्तः।

पाञ्चालीरीतिप्रतिपादनमपि वामनस्यापरं वैशिष्टचम्। वैदर्भीगौडीये तु भामहदण्डिनोरपि सम्मते किन्तु तृतीयरीत्युपपादनं वामनस्यैव कर्म। यथा— समग्रगुणा वैदर्भी ओजः कान्तिमती गौडीया, माधुर्यसौकुमार्योपपन्ना

पाञ्चाली इति। रीतीनां संज्ञाऽपि "विदर्भादिषु दृष्टत्वात्तत्समाख्या" इत्युक्त्वा साधारणीकृता तेनैव।

सन्त्यनेकानि चैतादृशानि वैशिष्ट्यानि यैर्वामनोऽपरवर्तिभिराचार्यैः सादरं स्मर्यतेऽनुगम्ते च।

गुणविषये विशेषः—

यथोक्तमग्निपुराणे—

"अलङ्कृतमपि प्रीत्यै न काव्यं निर्गुणं भवेत्।
वपुष्यललिते स्त्रीणां हारो भारायते परम्॥"

अपि च—

"यः काव्ये महतीं छायामनुगृह्णात्यसौ गुणः।
सम्भवत्येष सामान्यो वैशेषिक इति द्विधा॥" इति।

तेन शब्दार्थोभयव्यापी सामान्यगुणः अन्तरव्यापी च वैशेषिक इति।'

'रीतिरात्मा काव्यस्य', सा च पदरचनारूपा। पदरचना च बन्धः। ओजः-प्रभृतयो बन्धगुणाः। 'इति प्रतिपाद्य गुणानां शब्दार्थगतत्वं विंशतित्वं काव्य-शोभाकारित्वेन तदतिशयकारिभ्योऽलङ्कारेभ्यो वैलक्षण्यं च वामनेन निर्दि-ष्टम्।' तत्र शब्दार्थयोः काव्यशरीरत्वात्तस्याचेतनत्वाच्च तस्य न गुणाः किन्तु ते तु चेतनरूपस्य काव्यात्मभूतस्य रसस्य धर्माः, तेन तेषां रसमात्रवृत्तित्वेन शब्दार्थमात्रवृत्तिभ्योऽलङ्कारेभ्यस्तेषां वैशिष्ट्यं, तेषा माधुर्यौजःप्रसादात्मक-त्वेन त्रित्वं तत्र चेतसो द्रुतिदीप्तिविकासकारणत्वम्, इत्यपि मम्मटमतम्। माधुर्यादीनां द्रुत्यादितादात्म्यमात्रं स्वीकृत्यमिनवत्वेन विश्वनाथो मम्मटमेवानुसरति। जगन्नाथस्तु "किञ्चात्मनो निर्गुणतयाऽऽत्मरूपरस-गुणत्वं माधुर्यादीनामनुपपन्नम्। प्रयोजकत्वं चादृष्टादिविलक्षणं शब्दार्थ-रसरचनागतत्वमेव ग्राह्यम्" इति निर्दिश्य द्रुत्यादीनाञ्जनकत्वस्य रसा-स्वादमात्रवृत्तितया गुणानां तत्प्रयोजकत्वं शब्दार्थरसरचनावृत्तित्वमभि-दधाति। गुणानामानन्दविशेषात्मकद्रुत्यादिरूपत्वे नैव रसभेदापत्तिः प्रागेव कारणभेदेनोभयोर्भेदस्योक्तत्वात् तेन रसगुणयोराधाराधेयभावोऽपि न समीचीनः। अतः साहित्यदर्पणकारमतमेव समीचीनमिति चाधुनिकाः।

अत्र चिन्त्यं यद्वस्तुतो गुणादीनां रीतिधर्मत्वेऽपि आत्मलाभस्य शब्दार्थाधीनत्वात् तस्य निरूप्यत्वाच्च शब्दार्थधर्मत्वमुपचारादित्युक्तं भवति। गुणानां मुख्यतया आत्मधर्मत्वादेव सूत्रे 'वन्धे गुणाः' इत्युक्तम् न तु ते साक्षात्सम्बन्धेन शब्दार्थगताः। एवमात्मभूताया रीतेरेव गुणाः शौर्यादिवत् अलङ्काराः पुनस्तच्छरीरभूतशब्दार्थनिष्ठा इति। ओजःप्रभृतीनां गुणानामात्मभूतरीतौ समवायवृत्या यमकोपमादीनान्तु अलङ्कारत्वात् शब्दार्थयुगले संयोगवृत्या च स्थितिरिति वामनस्याशयेन भवितव्यम्।

तथैव, यथा मम्मटेन ध्वनि-गुणीभूतव्यङ्ग्यचव्यङ्ग्यचित्राधारमवलम्ब्य उत्तममध्यमाधमकाव्यभेदा निरूपितास्तथैव्र वामनेन समग्रगुणा वैदर्भी उत्तमकाव्याय शेषे तु सामान्यकाव्याय निर्दिष्टा सम्भवन्ति, इति।

एवमेव काव्यस्यात्मा रीतिः तद्व्यवहारप्रयोजकास्तु गुणा इति। वामनमतम्। ध्वनिरात्मा काव्यस्य, स एव च तद्व्यवहारप्रयोजक इति ध्वनिवादिनः। उभयत्रापि गुणास्तु आत्मनिष्ठा एव।

अपरञ्च—रीतिरात्मा काव्यस्य, रीतिस्तु गुणविशिष्टरचना, तत्र समग्रगुणा वैदर्भी, ओजःकान्तिमती गौडीया, माधुर्यसौकुमार्योपपन्ना पाञ्चाली' इति यदुक्तम्, तत्र काश्चन विप्रतिपत्तयः प्रदर्शिता आलोचकै र्यत्—किं समस्तगुणैः काव्यव्यवहारः उत कतिपयैः? आद्यमतेऽसमस्तगुणा गौडीया पाञ्चाली च कथं काव्यस्यात्मा भवितुमर्हतिः। अपरमतेऽपि 'अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः' इत्यत्र ओजआदिगुणानां स्थितित्वात्काव्यत्वं स्यात्। "स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनि। अस्याः रदच्छदरसो न्यक्करोतितां सुधाम् इत्यत्र गुणनैरपेक्ष्येण विशेषोक्तिव्यतिरेकालङ्कारयोरेव काव्यत्वमूरीकृतमस्ति। तत्कथमेतत्सिध्यतीति। विपत्तिरेषांतु सर्वत्राप्यापतति। मम्मटकृतकाव्यपरिभाषायां सगुणौ शब्दार्थौ' इत्युक्तम् तत्र किं समग्रगुणविशिष्टत्वं वा कतिपयगुणाविशिष्टत्वम्।' समग्रगुणविशिष्टपक्षे स्वीकृते एकैकगुणोदाहरणेषु काव्यत्वहानिः स्यात् समग्रगुणवैशिष्ट्यमपि दुर्लभमेव। न च कतिपयगुणविशिष्टता वास्त्वलङ्कारध्वनिषु गुणाधारभूतस्य रसस्याभावात् गुणस्यैवाभावः। एवमेव काव्यात्मा रस इति 'वाक्यं रसात्मकं काव्यम्' इति पक्षधरैरुक्तम्। तत्रापि सर्वे रसाः

सम्भूय काव्यस्यात्मा वा एकैको रसः इति विपत्तिः। प्रथमे पक्षेऽवलम्बिते न कुत्रापि काव्यत्वं स्यात् विरोधिरसानां सामानाधिकरण्याभावात् द्वितीये पक्षेऽवलम्बितेऽपि वस्त्वलङ्कारध्वनिषु रसाभावादात्महीनस्य काव्यत्वहानिः।

परमार्थस्तु परमतखण्डनं सुकरं मतस्थापना च दुष्करी। व्यवहृत-समस्तगुणं काव्यमुत्तमम्, ओजःकान्तिमात्रबाहुल्यं मध्यमम्, माधुर्यसौकुमार्य-बाहुल्यं सामान्यं काव्यमिति प्रस्थानाशयेन भवितव्यम्।

## गुणानां संक्षेपतो विवरणम्—

बन्धनस्य गाढत्वमोजः, बन्धनस्य शैथिल्यं प्रसाद, मार्गभिदः समता, आरोहावरोहक्रमः समाधिः, पृथक्पदत्वं माधुर्यम् अजरठत्वं सौकुमार्यम्, पदानां लोलायमानत्वमुदारता, अर्थव्यक्तिहेतुत्वमर्थव्यक्तिः, औज्वल्यं कान्तिः इति बन्धगुणाः (एषु श्लेषसमाधिप्रसादोदारता गाढबन्धत्वेन दीप्तिहेतुत्वात् ओजसि अन्तर्भाविता मम्मटेन। कष्टताग्राम्यत्वपरिहारादेव सौकुमार्थकान्ती परिहृते, समतायाा क्वचिद्दोषत्वादनित्यत्वान्नागुणः, तेन ओजोमाधुर्यप्रसादा एव गुणा इति तेषां मतम्।) एवमेव अर्थस्य प्रौढिरोजः, अर्थस्य प्रयोजकमात्रपरिग्रहः प्रसादः, घटना श्लेषः, अवैषम्यं समता, अर्थदृष्टिः समाधिः, उक्तिवैचित्र्यं माधुर्यम्, वस्तुस्वभावस्फुटत्वमर्थव्यक्तिः, दीप्तरसत्वं कान्तिः, अपारुण्यं सौकुमार्यम्, अग्राम्यत्वमुदारता इति दशार्थगुणाः। (अत्र विश्वनाथः— ओजः प्रसादो माधुर्यं सौकुमार्यमुदारता। तदभावस्य दोषत्वात्स्वीकृता अर्थगा गुणाः। अर्थव्यक्तिः स्वभावोक्त्यालङ्कारेण तथा पुनः। रसध्वनि-गुणीभूतव्यङ्ग्यानां कान्तिनामकः। श्लेषो विचित्रतामात्रमदोषः समता परम्। न गुणत्वं समाधेश्च तेन नार्थगुणाः पृथक्' इति।

इतरे भोजराजसम्मतगुणाश्चेत्थम्—काव्यविशेषेण योगत्वमुदात्तता, गाढबन्धत्वभौर्जित्यम्, चाटूक्तिसहकारि प्रियतराख्यानत्वं प्रेयः, सुप्तिङ्व्यु-त्पादनं सुशब्दता, शब्दानामन्तः संजल्परूपत्वं सौक्ष्म्यम्, ध्वनिमत्ता गाम्भी-र्यम्, व्यासेनाभिधानं विस्तरः, समासेनाभिधानं संक्षेपः यावदर्थपदत्वं संमितत्वम्, भवतोवाक्यवृत्तिर्भाविकम्, आरोहावरोहयोः क्रमो गतिः, उप-क्रमनिर्वाहो रीतिः विशिष्टभणितिरुक्तिः उक्तिप्रौढिपरिपाकः प्रौढिः इति।

तत्र दीप्तरसत्वं कान्तिर्यथा—

'प्रेयान्सोऽयमपाकृतः सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः ।
तावत्प्रत्युत पाणिसंपुटलसन्नीवीनितम्बं धृतो
धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥' इति ।

स च स्वोपज्ञया कविप्रियावृत्याऽलङ्कृतः सहदेवकृतया विवृत्योपेतः, महेश्वररचितसाहित्यसर्वस्वटिप्पण्या विभूषितः गोपेन्द्रभूपालकृतकामधेनुटीकया समेतो ग्रन्थोऽयं छात्रोपयोगिटिप्पण्या समलङ्करणायाऽमरभारतीप्रकाशनस्वामिना श्रेष्ठिना सुन्दरदासेन प्रार्थितोऽहं कार्येऽस्मिन्प्रसक्तः । तस्य तृतीयाधिकरणस्य कलानाम्नी विवृतिः प्रतिकलानुवादश्च प्रथमप्रयासे प्रकाशितौ । शेषभागा अपि क्रमेण प्रकाश्यन्ते एवेति आशासे ।

अत्र "त्रुटिर्मानुषी क्षमा दैवी" इतिलोकोक्तिमनुसृत्य या काचिदपि त्रुटिर्लभ्यते तस्या निराकरणाय विपश्चिद्भिरह निर्देश्ये इति प्रार्थयये सर्वविध लब्धवर्णान् । इति शम् ।

उच्छ्रिता वामनीया गीर्वामनोऽहं कलाविधौ ।
प्रांशुवद्धचूद्धमुद्गच्छन् पतेयञ्चेन्न विस्मयः ।
कामधेनुपयः कामं न स्पृशेट्टिप्पणी कला ।
आशासेऽहमियं ख्याता भवेद्वै वामनाशिषा ॥

वाराणसीमधिवसन्परशोस्तनूजो नेपालदेश्य इह लोकमणिदेहालः ।
श्रीवामनीयमतमस्य तदीयकाव्यालङ्कारसूत्रविवृतिं व्यदधां कलाख्याम् ।

२२।७ दुर्गाघाट गोशाला काशी — विदुषां वशंवदः
शुभविजया २०४२ ( वि० )— लोकमणिदाहालः

# ग्रन्थपरिचयः

अथ सर्वगुणोपेतवामनाचार्यनिर्मिते ।
काव्यालङ्कारसूत्राख्ये स्वीयवृत्तिसमन्विते ॥ १ ॥
पञ्चाधिकरणानीह साध्यायानि पृथक्पृथक् ।
सन्ति तेषां समुद्देशः काव्यस्याङ्गविवेचनम् ॥ २ ॥

शारीरं प्रथमं तत्र त्रयोऽध्यायाः प्रयोजनम् ।
शिष्यरीत्योर्निर्णयश्च काव्याङ्गं तद्विशेषकाः ॥ ३ ॥

द्वावध्यायौ द्वितीये तु दोषदर्शनसंज्ञिते ।
पदे पदार्थे वाक्ये च वाक्यार्थे दोषनिर्णयः ॥ ४ ॥
तृतीये गुणचिन्ता च द्वावध्यायौ तयोः क्रमात् ।
गुणालङ्कारभेदोऽथ शब्दार्थगुणचिन्तनम् ॥ ५ ॥

ततश्चतुर्थे त्र्यध्याये आलङ्कारिकसंज्ञिते ।
शब्दालङ्कारचिन्ता च ह्यर्थालङ्कारवर्णनम् ॥ ६ ॥

प्रायोगिके पञ्चमे तु द्वावध्यायौ तयोः पुनः ।
काव्यस्य समयः प्रोक्तः शब्दशुद्धिर्विचारिता ॥ ७ ॥

इत्येवं वाञ्छितं काव्यं साङ्गोपाङ्गं विवेचितम् ।
दीर्घायते गुणो यत्रालङ्कारो वामनायते ॥ ८ ॥

[ प्रथमाधिकरणस्य कलाटीकातः ]

# पण्डितवरो वामनः

गुणानलङ्कारत उन्नमय्य व्यवेचयत्काव्यनिकर्षहेतून् ।
अलङ्कृतीर्योऽतिशयत्वहेतून् तस्मै नमः कारणवामनाय ॥ १ ॥

( कलाटीकातः )

वृत्तिसमेतकाव्यालंकारसूत्राणां प्रणेता श्रीवामनपण्डितः कदा कुत्र समुत्पन्न इति न निर्णेतुं शक्यते, किं त्वयं ख्रिस्ताब्दीयसप्तमशतकोत्तरार्धान्न प्राचीनः, यतोऽयं भवभूतिप्रणीतोत्तररामचरितादि-श्लोकानुदाहृतवान् अथ च ध्वन्यालोकलोचने प्रथमोद्योते 'वामनाभिप्रायेणायमाक्षेपः, भामहाभिप्रायेण तु समासोक्तिरित्यमुमाशयं हृदये गृहीत्वा समासोक्त्याक्षेपयोरिदमेकमेवोदाहरणं व्यतरद्ग्रन्थकृत् इति वदन्तः श्रीमदाचार्याभिनवगुप्तपादा ध्वन्यालोककर्तुः श्रीमदाचार्यानन्दवर्धनाद्वामनस्य प्राचीनत्वं प्रकटयन्ति तस्मात्ख्रिस्ताब्दीयनवमशतकोत्तरार्धान्नाधस्तनो वामनः । भाति चायं काश्मीरकः अष्टमशतके कश्मीरमहीपतेर्विपश्चिद्वरस्य श्रीजयापीडस्य मन्त्री कश्चन वामनाभिध आसीत् । स एवायं काव्यालङ्कारसूत्रप्रणेतेत्यपि केचन काश्मीरका वदन्ति । काशिकावृत्तिकारो वामनस्त्वस्माद्भिन्नः प्राचीनश्च ध्वन्यालोकलोचन-काव्यप्रकाश-अलंकारसर्वस्वादिग्रन्थ-रत्नेष्वपि वामनमतं समुपन्यस्तमुपलभ्यते । अस्मिन्ग्रन्थे वृत्तौ अमरू-शतक - उत्तररामचरित - कादम्बरी - किरातार्जुनीय - कुमारसंभव मृच्छकटिक-मेघदूत-रघुवंश-विक्रमोर्वशीय-वीरचरित-वेणीसंहार-शाकुन्तल-शिशुपालवध-हर्षचरितादिग्रन्थेभ्यः समुद्धृत्योदाहरणानि दत्तानि सन्ति: किं च कामन्दकीनीति-नाममाला-हरिप्रबोधानाम् विशाखिल-शूद्रक-कविराजानां च नामान्यप्यत्र समुपलभ्यन्ते । महेश्वरकृता टीकाप्यस्य ग्रन्थस्य वर्तते ।

( प्राचीनभूमिकातः )

॥ श्रीः ॥

# काव्यालङ्कारसूत्राणि

'कला'-'प्रतिकला' संस्कृतहिन्दीव्याख्योपेतानि

(तत्र गुणविवेचनं नाम तृतीयमधिकरणम्)

## प्रथमोऽध्यायः

यद्विपर्ययात्मानो दोषास्तान् विचारयितुं गुणविवेचनमधिकरणमारभ्यते। तत्रौजःप्रसादादयो गुणा यमकोपमादयस्त्वलङ्कारा इति स्थितिः काव्यविदाम्। तेषां किं भेदनिबन्धनमित्याह—

[ कला ]

ययोः कृपाकटाक्षेण लभ्यन्ते सर्वसम्पदः।
तौ शब्दार्थमयौ वन्दे गौरीशौ सच्चिदात्मकौ॥ १॥
काव्यालङ्कारसूत्राणि वामनोक्तानि तत्पदैः।
व्याचिख्यासुस्तमेवादौ वामनं प्रणमाम्यहम्॥ २॥
विष्णुमायोद्भवां लोकमणिः परशुरामजः।
तनोमि वामनीयानां सूत्राणां विवृतिं कलाम्॥ ३॥
शारीरं प्रथमे प्रोक्तं द्वितीये दोषदर्शनम्।
शब्दार्थयोस्तृतीयेऽत्रोच्यते गुणविवेचनम्॥ ४॥

अथ तत्रभवान् स्वायत्तीकृतसकलकाव्यसाधनः पूजितवामनो वामनः स्वीयकाव्यालङ्कारसूत्राणां स्वोपज्ञवृत्तिं वितन्वन् काव्यदोषनिरूपणानन्तरं तद्व्यतिक्रमभूतगुणविवेचनं प्रारभते-यद्विपर्ययात्मान इत्यादिना—यद्विपर्ययात्मानः = येषाम् विपर्ययात्मानः ( व्यतिक्रमवृत्तयः ) दोषाः = पद-तदर्थ-वाक्य-

तदर्थगता: काव्यसौन्दर्याक्षेपका: असाधु-अन्यार्थ-भिन्नवृत्त-व्यर्थत्वादय:, तान् = दोषविपर्ययभूतान्, काव्यसौन्दर्याधायकान्, गुणान् = शब्दार्थधर्मान्, विचारयितुम् = विविक्तुम्, गुणविवेचनम् = गुणा: ( काव्यशोभाधायकधर्मा: ) विविच्यन्ते ( निर्णीयन्ते याथार्थ्येन स्वरूपावधारणीक्रियन्ते ) यत्र इति गुणविवेचनम् [ गुणा: अलङ्कारेभ्यस्ते च परस्परं विविच्यन्ते विभज्यन्तेऽस्मिन्निति कामधेनुकार: ), अधिकरणम् = अधिक्रियते (साधिकारं निरूप्यते अत्र इति) उपपादनम्; विषयादिपञ्चावयवविवेचनम् [ पञ्चावयवा: यथा—विषयविशयपूर्वपक्षोत्तरनिर्णया: । विषयो विचारार्हवाक्यम् अत्र गुणा:, विशय:-अस्यायमर्थो न वेति संशय:, पूर्वपक्ष:-प्रकृतार्थविरोधितर्कोपन्यास:; उत्तरपक्ष:-सिद्धान्तानुकूलतर्कोपन्यास:, निर्णय:—वाक्यार्थतात्पर्यनिश्चय: इति ] ( अत्र गुणविषये गुणगौणताऽऽलङ्कारप्राधान्यनिर्द्धारणात्मक दण्डिमतनिरसनपूर्वकं गुणालङ्कारभेदप्रदर्शनपुरस्सरमलङ्कारापेक्षया गुणगरिमस्थापनापूर्वकतद्भेदप्रतिपादनमेवाधिकरणत्वम् ), आरभ्यते = उपक्रम्यते । तत्र = गुणप्रसङ्गे, काव्यविदाम् = कविकृतियथार्थतत्वज्ञानाम्, ओज:प्रसादादय:, ओज:प्रसाद पुरस्सरा:, गुणा:, यमकोपमादय: = तत्प्रभृतय:, अलङ्कारा: इति, स्थिति: = गुणालङ्कारयो: पृथक्त्वेन व्यवहार: । तेषाम् = गुणालङ्काराणाम्, किम् = किमर्थम्, भेदनिबन्धनम् = भेदप्रतिपादनम् [ अथवा भेदस्य निबन्धनम् ( हेतु: ) किम् इति समाधातुम् ] आह = व्याचष्टे इति ।

## [ प्रतिकला ]

जिनके व्यतिक्रम दोष होते हैं, उन गुणों पर विचार करने के लिए गुणविवेचन नामक अधिकरण प्रारम्भ किया जाता है । उसमें काव्य के मर्म जानने वालों का यह मानना है कि ओज प्रसाद आदि गुण हैं और यमक उपमा आदि अलङ्कार हैं । उन गुण एवं अलङ्कारों का भेद क्यों किया गया है ? इसको बताते हैं ।

**काव्यशोभाया: कर्त्तारो धर्मा गुणा: ।। १ ।।**

ये खलु शब्दार्थयोर्धर्मा: काव्यशोभां कुर्वन्ति ते गुणा: । ते चौज:

प्रसादादयः। न यमकोपमादयः। कैवल्येन तेषामकाव्यशोभाकरत्वात्। ओजःप्रसादादीनां तु केवलानामस्ति काव्यशोभाकरत्वमिति ॥ १ ॥

**कला**—गुणान्निरूपयति–**काव्येत्यादिना**–काव्यशोभायाः कर्तारः धर्माः गुणाः इति।

काव्यशोभायाः = काव्यस्य ( रीत्यात्मनः शब्दार्थशरीरस्य कविकृतेः ) शोभा ( विच्छित्तिः, वैचित्र्यातिशयः ) तस्याः, कर्तारः = साधकाः उपपादयितारः, धर्माः = साक्षात्सम्बद्धाः, ( आत्मनो धर्मा इव ) गुणाः = गुणसंज्ञिता इति। शब्दार्थशरीर-काव्यस्य वैचित्र्यातिशयाधायकस्वभावाः गुणा इति।

उक्तं विशदयति – **ये खल्वित्यादिना** शब्दार्थयोः = अभिधानाभिधेययोः (गुणानां रीतिनिष्ठत्वेऽपि शब्दार्थधर्मत्वमुपचारात्) ये धर्माः = साक्षात्सम्बद्धाः, काव्यशोभाम् = काव्यवैचित्र्यातिशयम्, कुर्वन्ति = विदधति, ते काव्यविच्छित्याधायककाव्यार्थधर्माः, गुणा इति। ते = गुणास्तु, ओजःप्रसादादयः = ओजःप्रसादप्रभृतिरूपाः आत्मधर्मा एव। न यमकोपमादयः = नैव यमकोपमाप्रभृतयः। तेषाम् = यमकाद्यलङ्काराणाम्, कैवल्येन = गुणसाहित्यविरहेण, अकाव्यशोभाकरत्वात् = काव्यविच्छित्याधानासमर्थत्वात् इति गुणानामन्ययोगव्यवच्छेदः। केवलानाम् = अलङ्काररहितानाम्, ओजःप्रसादादीनाम्, गुणानाम्, तु, काव्यशोभाकरत्वम् = काव्यचमत्कारातिशयाधायकत्वम् साक्षात्सम्बद्धत्वात्, अस्तीति अयोगव्यवच्छेद इति ॥ १ ॥

**प्रतिकला**—'काव्य की शोभा को जताने वाले धर्म गुण हैं'। शब्द एवं अर्थ के जो धर्म काव्य की शोभा को जताते हैं वे गुण हैं। वे ओज प्रसाद आदि हैं। यमक, उपमा आदि नहीं क्योंकि गुणों के साथ न रहने पर केवल उन मात्र में काव्य की शोभा जताने की क्षमता न होने से। ओजः प्रसाद आदि में तो केवल उनमें ही काव्य की शोभा को जताने की क्षमता होती है ॥१॥

**तदतिशयहेतवस्त्वलङ्काराः ॥ २ ॥**

तस्याः काव्यशोभाया अतिशयस्तदतिशयस्तस्य हेतवः। तु शब्दो व्यतिरेके। अलङ्काराश्च यमकोपमादयः ॥२॥

**कला**--गुण.शब्दप्रवृत्तिनिमित्तमुक्त्वा अलङ्कारपदप्रवृत्तिनिमित्तम् आवेदयितुम् ( स्पष्टयितुम् ), आह–तदित्यादिना । तदतिशयहेतवः तु अलङ्काराः तदतिशयहेतवः=काव्यशोभोत्कर्षकारणानि, तु इति भेदे, अलंकाराः= यमकाद्याः शब्दगताः उपमाद्या अर्थगताश्च'। उक्तं विशदयति तस्या इत्यादिना-तस्याःकाव्यशोभायाः कविकृतिविच्छित्तेः, अतिशयः=अत्यन्तोत्कर्षः-तदतिशयः, तस्य=शोभातिशयस्य, हेतवः=कारणानि । तु शब्दः व्यतिरेके=भेदे । अलंकाराः=काव्यशोभातिशयाधायकाः, च यमकोपमादयः=यमकोपमाप्रभृतयः शब्दार्थगताः इति ॥२॥

**प्रतिकला**—गुण के प्रवृत्तिनिमित को बता कर अब अलंकार के प्रवृत्तिनिमित्त को बताने के लिए कहते हैं—

उस ( काव्यशोभा ) के अतिशय के कारण अलंकार होते हैं। ( गुण काव्य के शोभाधायक धर्म हैं तो अलंकार उस शोभा को बढाने के कारण । )

उस काव्यशोभा का जो अतिशय है उसके कारण जो हैं वे अलंकार होते हैं जो यमक उपमा आदि हैं ॥२॥

अत्र श्लोकौ !

युवतेरिव रूपमङ्ग काव्यं स्वदते शुद्धगुणं तदप्यतीव ।
विहितप्रणयं निरन्तराभिः सदलङ्कारविकल्पकल्पनाभिः ॥१॥
यदि भवति वचश्च्युतं गुणेभ्यो वपुरिव यौवनवन्ध्यमङ्गनायाः ।
अपि जनदयितानि दुर्भगत्वं नियतमलङ्करणानि संश्रयन्ते ॥२॥

**कला**–सूत्रोक्ताशयमन्वयव्यतिरेकाभ्यां पुंसयति–श्लोकद्वयेन । तत्रान्वयेन यथा—युवतेरित्यादि–शुद्धगुणम् अपि काव्यम् युवतेः रूपम् इव स्वदते अङ्ग निरन्तराभिः अलंकारविकल्पकल्पनाभिः विहितप्रणयम्, सत् तत् अतीव स्वदते इत्यन्वयः ।

शुद्धगुणम्=शुद्धाः ( अलंकारहीनाः ) गुणाः ( ओजःप्रसादादयः ) यस्य तत्, अपि, काव्यम्=कविकृतिः, युवतेः=तरुण्याः, शुद्धगुणम्=शुद्धाः [कटकादिहीनाः] गुणाः [ लावण्यादयः ] यस्य तत्, रूपम्=स्वरूपम्, इव, स्वदते = रोचते, सहृदयेभ्य इति शेषः, अङ्ग इति पुनरर्थे, निरन्तराभिः = अविच्छिन्नाभिः, अलंकारविकल्पकल्पनाभिः= अलकाराः (यमकोपमादयः) तेषां

विकल्पाः (शोभाः) तेषां कल्पनाभिः (रचनाभिः) विहितप्रणयम् = रचितानुबन्धम्, सत्, तत् = काव्यम्, युवतेः, निरन्तराभिः = निविडाभिः, अलङ्कारविकल्पकल्पनाभिः = कटकादिविच्छित्तिविन्यासैः, विहितप्रणयम् = रचितशृङ्गारम्, रूपम् इव, अतीव = नितान्तमेव स्वदते इति। गुणमात्रविशिष्टमपि काव्यं गुणमात्रविशिष्टं युवतेः रूपमिव स्वदते सालंकारञ्चेदतिमात्रं स्वदते इति।

व्यतिरेकेण यथा—यदीत्यादि—यदि वचः गुणेभ्यः च्युतम् अङ्गनायाः यौवनवन्ध्यम्. वपुः इव भवति जनदयितानि अपि अलंकरणानि नियतम् दुर्भगत्वम्, संश्रयन्ते इत्यन्वयः।

यदि = चेत्, वचः = वाक्यमर्थात्काव्यम्, गुणेभ्यः = ओजःप्रसादादिभ्यः, च्युतम् = विधुरम्, तत्, अङ्गनायाः = सीमन्तिन्याः, यौवनबन्ध्यम् = तारुण्यविरहितम्, गलितयौवनम् अतएव लावण्यशून्यम्, वपुः = शरीरम्, इव, भवति = सञ्जायते, तदा जनदयितानि = लोकप्रियाणि अपि, अलङ्करणानि = अलङ्काराः आभूषणानि च, नियतम् = अवश्यमेव, दुर्भगत्वम् = विरूपत्वम् कमनीयताविरहाद्ध्द्धेयत्वम्, संश्रयन्ते = भजन्त इति। गुणहीनं काव्यं तारुण्यहीनं स्त्रीशरीरमिवाग्राह्यं भवति तदा अलंकारणानि च कमनीयत्वं विजहति इति ॥२॥

**प्रतिकला**—इस विषय में दो श्लोक हैं

गुण मात्र से विशिष्ट भी काव्य युवती के गुणमात्र से विशिष्ट रूप की तरह कमनीय लगता है। निरन्तर अलङ्कारों की शोभा की कल्पना से रचित अनुबन्ध के होने पर वह और अत्यन्त कमनीय बन जाता है जैसे युवती का खचित आभूषणों की शोभा की सजावट से अनुबन्ध किया गया रूप।

काव्य गुणों से विहीन होने पर स्त्री के तरुणाई से रहित शरीर की तरह [ अकमनीय ] हो जाता है, उस समय लोकप्रिय अलङ्करण [ अलङ्कार या आभूषण ] भी अवश्य ही भद्दे लगते हैं ॥२॥

पूर्वे नित्याः ॥३॥

पूर्वे गुणा नित्याः । तैर्विना काव्यशोभानुपपत्तेः ॥३॥

**कला**—प्रकारान्तरेण गुणालङ्कारभेदं दर्शयति 'पूर्वे' इत्यादिना-पूर्वे नित्याः इति ।

पूर्वे=प्रथमनिर्दिष्टाः गुणाः, नित्याः=नित्ययोगिनः इति । उक्तं स्पष्टयति 'पूर्वे' इत्यादिना पूर्वे=प्रथमोद्धृताः, गुणाः=ओजःप्रसादादयः, नित्याः=नियतस्थाः । तैः=गुणैः, विना=तेषामभावे तु, काव्यशोभानुपपत्तेः=काव्यविच्छित्त्यसंभवात् , काव्यशोभायाः गुणेषु सत्सु तद्भावत्वात् गुणविरहेऽतद्भावत्वात् अर्थात् गुणान्वयव्यतिरेकानुकारित्वात् । अलङ्कारास्त्वनित्या एव । तेषामभावेऽपि काव्यशोभोपपत्तेरिति शेषः ॥ ३ ॥

**प्रतिकला**—प्रथम नित्य हैं ॥ ३ ॥

प्रथम अर्थात् गुण नित्य हैं, क्योंकि उनके विना काव्य की शोभा नहीं होती ॥ ३ ॥

एवं गुणालङ्काराणां भेदं दर्शयित्वा शब्दगुणनिरूपणार्थमाह—

**ओजःप्रसादश्लेषसमतासमाधिमाधुर्यसौकुमार्योदारताऽर्थव्यक्तिकान्तयो बन्धगुणाः ॥ ४ ॥**

बन्धः पदरचना, तस्य गुणा बन्धगुणाः ओजःप्रभृतयः ॥ ४ ॥

**कला**—सम्प्रति गुणोद्देशसूत्रं निर्दिशति एवमित्यादि । एवम्=इत्थम्, गुणालङ्काराणाम्=गुणानाम् अलङ्काराणाम् च, भेदम्=उपादेयतागतं, प्रकृतिगतञ्च विभेदम्, दर्शयित्वा=निर्दिश्य, शब्दगुणनिरूपणार्थम्=शब्दगतगुणनिर्णयार्थम्, आह ओज इत्यादिना-ओजः-प्रसाद-श्लेष-समता-समाधि-माधुर्य-सौकुमार्यउदारता-अर्थव्यक्ति-कान्तयः बन्धगुणाः इति

ओजः ( गाढबन्धत्वम् ) प्रसादः ( बन्धशैथिल्यम् ) श्लेषः ( मसृणत्वम् ) समता ( मार्गाभेदः ) समाधिः ( आरोहावरोहक्रमः ) माधुर्यम् ( पृथक्पदत्वम् ) सौकुमार्यम् ( अपारुष्यम् ) उदारता ( बन्धविकटत्वम् ) अर्थव्यक्तिः ( झगित्यर्थप्रतिपत्तिः ) कान्तिः ( औज्ज्वल्यम् ) च,

बन्धगुणाः=पदरचनाशोभाधायकधर्मा इति। उक्तं व्याख्याति बन्ध इत्यादिना–बन्धः ( पदरचना, सुप्तिङन्तविन्यासः ) तस्य गुणाः ( शोभाधायकधर्माः) इति बन्धगुणाः, ओजःप्रभृतयः = ओजःप्रमुखा दश इति। (अत्र बन्ध शब्दो विशेषेण व्याख्येयः। यदुक्तं काव्यात्मा रीतिः, रीतिश्च विशिष्टपदरचना. विशेषस्तु गुणात्मेति तेन गुणानां रीतिधर्मत्वं प्रतिपादितम्, किञ्च तेषां शब्दार्थयोरेवात्मलाभत्वात् तेषामुपचाराच्छब्दार्थधर्मत्वमप्युक्तम्। तत्र ये शब्दनिष्ठा गुणास्तेषामभिधया रीतिधर्मत्वमेवेति प्रतिपादनाय शब्दार्थव्यवच्छेदनाय च बन्धब्दस्याऽत्र प्रयोगः। तथा च तेषां गुणत्वात् आत्मनि समवायवृत्या यमकादीनान्त्वलङ्कारत्वाच्छरीरे संयोगवृत्या स्थितिरिति स्पष्टोऽर्थः ) ॥४॥

**प्रतिकला**—इस प्रकार गुण एवं अलंकारों के भेद को दर्शाकर शब्द गुणों के निरूपण के लिए कहते हैं—

ओजः, प्रसाद, श्लेष, समता, समाधि, माधुर्य, सौकुमार्य, उदारता, अर्थव्यक्ति, कान्ति ये बन्ध अर्थात् पद रचना के गुण हैं ॥४॥

पदों की रचना बन्ध है, उसके गुण जो हैं ओज आदि हैं। अतः ये बन्धगुण हैं ॥४॥

तान् क्रमेण दर्शयितुमाह—

**गाढबन्धत्वमोजः ॥ ५ ॥**

बन्धस्य गाढत्वं यत् तदोजः ॥ ५ ॥

यथा–'विलुलितमकरन्दा मञ्जरीर्नर्त्तयन्ति' ॥३॥

न पुनः–'विलुलितमधुधारा मञ्जरीर्लोलयन्ति' ॥४॥

**कला**—सम्प्रति क्रमप्राप्तं गुणविशेषधर्मकथनमुपक्रमते–तानित्यादिना–तान्=गुणान्, क्रमेण=उद्देशसूत्रक्रमेण, दर्शयितुम्=स्पष्टयितुम्, आह–गाढबन्धत्वमित्यादि–गाढबन्धत्वम् ओजः इति।

गाढबन्धत्वम्=गाढः ( निविडः, दृढः ) बन्धः ( पदरचना ) यस्मिन्स्स गाढबन्धस्तस्य भावो गाढबन्धत्वम्-पदानां गाढविन्यासः, ओजः=ओजोगुणः

भवति इति । उक्तं स्पष्टयति बन्धस्येत्यादिना बन्धस्य = पदरचनायाः यत् गाढत्वम् = दार्ढ्यम्, तत्, ओजः इति । बन्धस्य गाढत्वे सहकाराणि यथा—संयुक्ताक्षरत्वम् रेफशिरस्कवर्णप्रयोगः, प्रथमद्वितीयैः, तृतीयचतुर्थैः, प्रथमैस्तृतीयैश्च वर्गैः संयोगः, गुरुवर्णान्तता विसर्जनीयोपध्मानीयजिह्वामूलीयानाम्, समस्तशब्दप्रयोगः, एतेषाञ्च तरतमभावेनावस्थानम्, इति कामधेनुटीकायाम्) ओज उदाहरति यथा विलुलितेत्यादि-विलुलितमकरन्दाः मञ्जरीः नर्तयन्ति इति । विलुलितमकरन्दाः = विलुलितः (चपलितः-चापल्येन पीतः ) मकरन्दः (पुष्परसः) यैस्ते-भ्रमराः, मञ्जरीः = वल्लरीः, नर्तयन्ति = नाटयन्ति इति । अत्र प्रथमे मकरन्दशब्दस्य चरमे नर्तयन्ति इत्येतस्य प्रयोगो गाढबन्धत्वाय । तमेवं प्रत्युदाहरति-न पुनः = नैव च, विलुलितमधुधाराः = चपलितरसधाराः भ्रमराः, मञ्जरीः = वल्लरीः लोलयन्ति = कम्पयन्ति इति । अत्र न गाढबन्धत्वं विन्यासशैथिल्यात् । तयोः प्रथमं बन्धगाढत्वस्य द्वितीयं शिथिलबन्धत्वस्य (प्रसादस्य) उदाहरणे इति स्पष्टम् ॥५॥

**प्रतिकला**——उन गुणों को क्रम से दिखलाने के लिए बताते हैं——

'पदों का दृढ विन्यास ओज है ।' पदों की रचना का जो दृढत्व है वही ओज गुण है । जैसे पुष्परस को चपलित करते हुए भ्रमर मञ्जरियों को नचाते हैं' न कि इसमें–मधु की धारा को चञ्चल बनाते हुए भ्रमर मञ्जरियों को कँपाते हैं ।' एक ही अर्थ होने पर भी पहले में रचना की दृढता है दूसरे में शिथिलता ॥ ५ ॥

**शैथिल्यं प्रसादः ॥ ६ ॥**

बन्धस्य शैथिल्यं शिथिलत्वं प्रसादः ॥६॥

**कला**—क्रमप्राप्तं द्वितीयबन्धगुणं प्रसादं निरूपयति–शैथिल्यमित्यादिनाशैथिल्यम् प्रसाद इति ।

शैथिल्यम् = बन्धश्लेथत्वम्, प्रसादः = प्रसादगुण इति । उक्तं व्याख्याति बन्धस्येत्यादिना-बन्धस्य = पदरचनायाः, शैथिल्यम् = शिथिलत्वम् (अदार्ढ्यम्, श्लथत्वम्) प्रसाद इति ॥ ६ ॥

**प्रतिकला**—दूसरे शब्दगुण प्रसाद का लक्षण करते हैं ।

शिथिलता ही प्रसाद है।

रचना की शिथिलता ( दृढता का न होना ) ही प्रसाद गुण है ॥६॥

नन्वयमोजोविपर्ययात्मा दोषः, तत् कथं गुण इत्याह —

गुणः संप्लवात् ॥७॥

गुणः प्रसादः । ओजसा सह संप्लवात् ॥७॥

**कला**—गुणविपर्ययत्वं दोष इत्युक्तम् । प्रसादस्य ओजोविपर्ययात् कथं गुणत्वमित्याशङ्कापरिहाराय कथयति—नन्विति—ननु इति तर्के, ओजोविपर्ययात्मा = ओजोगुणवैपरीत्येन स्थितः-ओजसो गाढबन्धत्वलक्षणात् प्रसादस्य शिथिलबन्धत्वलक्षणात्, अयम् = प्रसादगुणः दोषः = काव्यसौन्दर्याक्षेपक एवः, तत् = तस्मात्, कथम् गुण इति आशङ्कानिवारणाय आह गुण इत्यादि— संप्लवात् गुण इति ।

सम्प्लवात् = मेलनात्, गुणः = गुण एव नैव दोष इति । उक्तं व्याख्याति गुण इत्यादिना-प्रसादः = प्रसादाख्यः, गुणः = गुण एव । ओजसा = ओजोगुणेन, सह, संप्लवात् = मेलनात् साहचर्यात् । ओजोगुणसाहचर्यात् प्रसादोऽपि गुण एवेत्याशयः ॥७॥

**प्रतिकला**—बन्ध का गाढत्व ओज होता है और शैथिल्य प्रसाद तो प्रसाद ओज गुणका विपरीत हुआ । गुण का विपरीत तो दोष होता है । फिर प्रसाद कैसे गुण होता है इस आशङ्का के निवारण के लिए कहते हैं ।

मेलन से ( प्रसाद ) गुण होता है

प्रसाद भी गुण ही होता है, ओज गुण के साथ होने से-साहचर्य से-ओज गुण से मिलन होने पर प्रसाद भी गुण होता है ॥७॥

न शुद्धः ॥८॥

शुद्धस्तु दोष एवेति ॥८॥

**कला**—प्रसादस्योजःसम्प्लवात् गुण इत्युक्तम्, तदसम्प्लवने तु दोष एवेति दर्शनायाह नेत्यादिना-शुद्धः न इति ।

शुद्धः = ओजसाऽसम्प्लुतः तदसाहचर्येण स्थितस्तु, न नैव गुणः, अपितु दोष एवेति ।

उक्तं विशदयति शुद्ध इत्यादिना-शुद्धः = ओजोऽमिश्रशैथिल्ययुक्तः, केवलस्तु, दोष एव = न गुण इति ॥८॥

**प्रतिकला**--शुद्ध तो गुण नहीं होता है ।

शुद्ध अर्थात् ओज गुण के साथ में न रहा प्रसाद तो दोष ही होता हैं ॥८॥

ननु विरुद्धयोरोजःप्रसादयोः कथं सम्प्लव इत्याह—

**स त्वनुभवसिद्धः ॥९॥**

स तु संप्लवस्त्वनुभवसिद्धः तद्विदां रत्नादिविशेषवत् ॥९॥

अत्र श्लोकः—

करुणप्रेक्षणीयेषु संप्लवः सुखदुःखयोः ।
यथाऽनुभवतः सिद्धस्तथैवौजःप्रसादयोः ॥५॥

**कला**—ओजःप्रसादयोः विरुद्धस्वभावयो कथं संयोग इत्याशङ्कानिवारणाय आह ननु इत्यादिना-ननु = इति-तर्के, विरूद्धयोः = विपरीतस्वभावयोः गाढत्वशैथिल्यलक्षणयोः ओजःप्रसादयोरुभयोः, कथम् सम्प्लवः = मेलनम् इति आह स इत्यादि । स तु अनुभवसिद्धः इति ।

सः = ओजः प्रसादसम्प्लवः, तु, अनुभवसिद्धः = उपलम्भनिश्चितः इति ।

उक्तं स्पष्टयति स इत्यादिना । स = तादृशः, सम्प्लवः = ओज प्रसादयोः मेलनम्, तु, तद्विदाम् = तद्यथार्थज्ञानाम्, अनुभवसिद्धः = उपलम्भनिश्चितः स्वसंवेदितः, रत्नादिविशेषवत् = रत्नविशेषज्ञानवत्, परीक्षाऽनुभवसाक्षिक इत्याशयः । यथा तदनुभवी रत्नपरीक्षकः रत्नवैशिष्ट्यं जानाति तथैव काव्यविदामपि ओजःप्रसादयोः सम्प्लवः स्वसंवेदित इति ।

विरुद्धसम्प्लवमभिदर्शयति करुणेत्यादिना—यथा करुणप्रेक्षणीयेषु सुखदुःखयोः सम्प्लवःअनुभवतःसिद्धः तथा एव ओजःप्रसादयोः सम्प्लवःअनुभवतः

सिद्ध इति। यथा = येन प्रकारेण, करुणप्रेक्षणीयेषु = करुणानि (कारुण्याप्लावितानि) प्रेक्षणीयानि (दर्शनीयानि-मनोज्ञानि) च तेषु युगपदनुभूयमानेषु (अथवा करुणप्रेक्षणीयेषु कारुण्यदृश्यप्रधानेषु काव्येषु) सुखदुःखयोः = आनन्दकष्टयोः समसमयसमुत्पन्नयोः, सम्प्लवः = युगपदाभासनम्, अनुभवतः = स्वसंवेदनात् सिद्धः = निश्चितः, तथैव = तेनैव प्रकारेण, ओजःप्रसादयोः, गाढत्वशैथिल्यलक्षणयुतयोरुभयोः, सम्प्लवः = मेलनम्, अनुभवतः = उपलम्भतः, सिद्धः = ज्ञात इति ॥ ६ ॥

**प्रतिकला**—मान लिया जाय कि ओज से मिश्रित होने पर प्रसाद गुण बन जाता है, फिर परस्पर विरूद्ध ओज एवं प्रसाद का मिश्रण ही कैसे हो सकता है - इसपर कहते हैं—

वह ( ओज एवं प्रसाद ) का मिश्रण तो अनुभव से सिद्ध है।

वैसा मिश्रण तो उसके तत्व के जानने वालों के अनुभव से सिद्ध है जैसे कि रत्न विशेष का ज्ञान। ( जैसे अनुभवी जौहरी रत्न की विशेषता को जानता है, उसी तरह यह ओज एवं प्रसाद का संमिश्रण भी काव्य जानने वालों के अनुभव से सिद्ध है। )

इसमें एक श्लोक भी है—

जिस प्रकार करुण दृश्य वाले काव्यों में सुख एवं दुःख का एक साथ ही अनुभव होता है उसी तरह ओज एवं प्रसाद का एक साथ होने का ज्ञान भी अनुभव सिद्ध है ॥९॥

**साम्योत्कर्षौ च ॥ १० ॥**

साम्यमुत्कर्षश्चौजःप्रसादयोरेव ॥ १० ॥

तत्र साम्यं—यथा 'अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे नृपतिककुदं दत्वा यूने सितातपवारणम्' ॥ ६ ॥ क्वचिदोजः प्रसादादुत्कृष्टम्। यथा—'व्रजति गगनं भल्लातक्याः फलेन सहोपमाम्' ॥७॥ क्वचिदोजसः प्रसादस्योत्कर्षः। यथा—कुसुमशयनं न प्रत्यग्रं न चन्द्रमरीचयोर्न च मलयजं सर्वाङ्गीणं न वा मणियष्टयः' ॥ ८ ॥

**कला**—तयोः सम्प्लवस्थितिं निर्दिशति साम्योत्कर्षौ च इत्यनेन-साम्योत्कर्षौ = साम्यम् ( उभयोः समत्वम् ) उत्कर्षः ( पर्यायत उभयोरेव प्रकर्षः च तौ, च इति अनुभवसिद्धाविति।

उक्तं विशदयति साम्यमित्यादिना। साम्यम् = उभयोरोजःप्रसादयोः समस्थितित्वेनावस्थितिः, उत्कर्षः = ओजसःप्रसादात्प्रकर्षः, प्रसादस्यौजसः प्रकर्षश्च, ओजःप्रसादयोः = तदुभयोः एवेति। साम्यमुदाहरति–अथ स इत्यादिना–अथ विषयव्यावृत्तात्मा स यूने सूनवे नृपतिककुदम् सितातपवारणम् यथाविधि दत्वा इति।

अथ = अनन्तरम्, विषयव्यावृत्तात्मा = सांसारिकभोगनिवृत्तचित्तः, सः, यूने = वयस्काय, सूनवे = पुत्राय, नृपतिककुदम् = राजचिन्हम्, सितातपवारणम = स्वेतच्छत्त्रम्, यथाविधि = नियमतः, दत्वा = समर्प्य इति। अत्र 'विषयव्यावृत्तात्मा' इत्यत्रौजः, यथाविधि सूनवे इत्यत्र प्रसादः, तयोः भिन्नदेशत्वेऽपि परस्परच्छायानुकारित्वात् साम्येन सम्प्लव इति।

एवमेव क्वचित्तु प्रसादाद्दुत्कृष्टमोजः। तदुदाहरति—व्रजतीत्यादिना-गगनम् भल्लातक्याः फलेन सह उपमाम् व्रजति इति।

गगनम् = आकाशम्, भल्लातक्याः = वीरवृक्षस्य, अग्निमुख्याः, फलेन, सह, उपमाम् = तुल्यताम्, व्रजति = गच्छति इति। अत्र व्रजति गगनं भल्लातक्याः इत्योजः फलेन सहोपमामिति प्रसादः।

क्वचित्तु ओजसः = ओजोगुणात्, प्रसादस्य = प्रसादगुणस्य, उत्कर्षः = प्रकर्षः। तदुदाहरति कुसुमेत्यादि–न प्रत्यग्रं कुसुमशयनम्, न चन्द्रमरीचयः, न च सर्वाङ्गीणम् मलयजम् न वा मणियष्टयः इति।

न प्रत्यग्रम् = नवम्, कुसुमशयनम् = पुष्पशय्या, न चन्द्रमरीचयः = इन्दु दीधितयः, न च सर्वाङ्गीणम् = सर्वावयवगतम्, मलयजम् = चन्दनम्, न वा मणियष्टयः = रत्नलगुडानि एव तस्याः सुखमाधातुं समर्थाः इति। अत्र कुसुमशयनमित्यत्र प्रसादस्योत्कर्षः इति ॥ १० ॥

**प्रतिकला**–(दोनों की समता और बारी बारी से प्रकर्ष भी) ओज एवं प्रसाद की समता वा पर्याय से उत्कर्ष। दोनों की समता, जैसे–विषयों से दूर

हुई आत्मा जिसकी ऐसे उन्होंने जवान लड़के को राजा के चिह्न सफेद छतरी को विधिपूर्वक देकर। कहीं ओज प्रसाद से उत्कृष्ट होता है, जैसे— आकाश अग्निमुखी के फल की बराबरी में पहुँचता है। कहीं प्रसाद ओज: से उत्कृष्ट होता है जैसे —

न नयी फूलों की शय्या, न चाँदनी, न अङ्गों भर लगाया गया चन्दन: न ही मणियों की यष्टियाँ ही ( उनके लिए सुखकर हैं ) ॥ १० ॥

मसृणत्वं श्लेषः ॥ ११ ॥

मसृणत्वं नाम तत् यस्मिन् सति बहून्यपि पदान्येकवद्भासन्ते ॥११॥

यथा—'अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः' ॥ ९ ॥

न पुनः—'सूत्रं ब्राह्ममुरःस्थले'। 'भ्रमरीवल्गुगीतयः'। तडित्कलिलमाकाशम् इति। एवं तु श्लेषो भवति 'ब्राह्मं सूत्रमुरःस्थले'। भ्रमरीमञ्जुगीतयः,। 'तडिज्जटिलमाकाशम्' इति ॥ ११ ॥

कला—तृतीयं शब्दगुणं श्लेषं निरूपयति मसृणत्वमित्यादिना—मसृणत्वं श्लेपः इति।

मसृणत्वम् = बहुपदैकावभासनम्, श्लेषः = श्लेषगुण इति। तमेव व्याख्याति मसृणत्वमित्यादिना-मसृणत्वं नाम = मसृणत्वसंज्ञितम्, तद् = तादृशम् यस्मिन् गुणे सति = उपस्थितौ, बहूनि = अनेकानि, अपि, पदानि = सुप्तिङन्तानि, एकवत् = एकपदवत्, भासन्ते = प्रतीयन्ते इति-व्यासेऽपि समासावभासः श्लेष इति। श्लेषमुदाहरति-अस्त्युत्तरस्यामिति-उत्तरस्यां दिशि हिमालयः नाम नगाधिराजः अस्ति इति।

उत्तरस्याम् = कौवेर्याम्, दिशि = हरिति, देवतात्मा = देवमयः, हिमालयः नाम = हिमालयसंज्ञितः, नगाधिराजः = पर्वतराजराजः, अस्ति = विद्यते इति। अत्र व्यस्तरूपेण स्थितान्यपि पदान्यतिसमस्तपदवदवभासन्ते, तेनाऽत्र श्लेषः। एतत्सामान्योदाहरणम्। पुनर्व्यतिरेकमुखेनान्वयं दर्शयति—न = नैव, पुनः = विशेषेण, यथा—सूत्रम् ब्राह्ममुरस्थले-उरःस्थले = वक्षःस्थले,

ब्राह्मम्=ब्रह्मसम्दन्धितम्, सूत्रम्=यज्ञोपवीतम् इति; यथा च भ्रमरीवल्गु-गीतयः-भ्रमरीणाम्=षट्पदरमणीनाम् वलग्यः (मनोहराः) गीतयः (गानकानि) इति, यथा च तडित्कलितमाकाशम्-तडिता (विद्युता) कलितम् (व्याप्तम्) आकाशम्=गगनम्, इति च इत्यादौ नैव श्लेषः एकपदावभासनाभावात्तत्रत्यपदानाम्। श्लेषस्तु, एवम्=वक्ष्यमाणप्रकारेण पदन्यासेन भवति यथा-सूत्रं ब्राह्ममुरःस्थले इत्यत्र 'ब्राह्मं सूत्रमुरः स्थले' इति, 'भ्रमरीवल्गुगीतयः इत्यत्र भ्रमरीमञ्जुगीतयः इति, तडित्कलितमाकाशम् इत्यत्र तडिज्जटिलमाकाशम् इति ॥ ११ ॥

**प्रतिकला** -[ पदों का ] मसृणत्व श्लेष है।

मसृणत्व वह है जिसके रहने से एक से अधिक पद भी एक पद जैसे लगते हैं। जैसे उत्तर दिशा में हिमालय नाम के देवस्वरूप पर्वतराजराज हैं। किन्तु ऐसे में नहीं सूत्र ब्राह्म उरस्थल में, भ्रमरियों के वल्गु गीत, बिजली से कलित आकाश। किन्तु इस प्रकार से रखने पर उनमें भी श्लेष आ जाता है—"ब्रह्म सूत्र उर स्थल में, 'भ्रमरियों के मञ्जु गीत' बिजली से जटिल आकाश ॥ ११ ॥

**मार्गाभेदः समता ॥ १२ ॥**

**मार्गस्याभेदो मार्गाभेदः समता। येन मार्गेणोपक्रमस्तस्याऽत्याग इत्यर्थः। श्लोके प्रबन्धे चेति। पूर्वोक्तमुदाहरणम् ॥ १२ ॥**

**विपर्ययस्तु यथा—प्रसीद चण्डि! त्यजमन्युमञ्जसा जनस्तवाऽयं पुरतः कृताञ्जलिः। किमर्थमुत्कम्पितपीवरस्तनद्वयं त्वया लुप्त-विलासमास्यते ॥ १० ॥**

**कला**–चतुर्थं बन्धगुणं समतां व्याख्याति मार्गाभेद इत्यादिना-मार्गाभेदः समता इति।

मार्गाभेदः=मार्गस्य (रचनाविधेः) अभेदः (ऐकरूप्यम्)—रचनायाः आद्योपान्तमेकरूपता, समता=समतागुण इति। तमेव व्याख्याति—मार्गस्येत्यादिना—मार्गस्य=रचनाविधेः अभेदः=एकरूपता=मार्गाभेदः, समता=समतागुणः। येन मार्गेण (स्वरेण) उपक्रमः (आरम्भः) तस्य

अत्यागः ( सातत्यम् ) इत्यर्थः । आद्यारान्तमेकद्वारवना समता इति । सा च श्लोके = एकपद्ये, प्रबन्धे = प्रकरणसमूहे वा भवति च इति, पूर्वोक्तन् = अस्त्युत्तरस्यामित्यादि पूर्वोदाहृतम्, उदाहरणम् इति । विपर्ययः = तद्व्यतिक्रमः, तु, यथा [ प्रत्युदाहरणं यथा ] प्रसीदेत्यादि—चण्डि प्रसीद अञ्जसा मन्युन् त्यज अयम् जनः तव पुरतः कृताञ्जलिः त्वया किमर्थम् उत्कम्पितपीवरस्तनद्वयम् लुप्तविलासम् आस्यते इति ।

हे चण्डि ! हे कोपने ! प्रसीद = प्रसन्ना भव, मन्युम् = क्रोधम्, अञ्जसा = शीघ्रम्, त्यज = मुञ्च, अयम् जनः, तव प्रार्थयिता, तव = ते, पुरतः = अग्रतः, कृताञ्जलिः = बद्धाञ्जलिः अस्ति, त्वया = प्रार्थितसुलभया भवत्या, किमर्थम् = कस्माद्धेतोः, उत्कम्पितपीवरस्तनद्वयम् = उल्लसितघनकुचयुगलम्, लुप्तविलासम् = गतक्रीडम् यथास्यात्तथा, आस्यते = स्थीयते इति । अत्र प्रसीद, त्यज अस्तीति कर्तृवाचकक्रियापदप्रयोगप्रक्रान्तमार्गं तद्विहाय आस्यते इति भाववाचकक्रियाप्रयोगापरमार्गग्रहणम् समताविपर्यय एव । तत्र उत्तरार्धेऽपि कर्तृवाचिक्रियाया एव प्रयोग इष्टः ॥१२॥

**प्रतिकला**—चौथे बन्धगुण समता को बताते हैं—

मार्ग का अभेद (एक रूप) होना समता है । मार्ग का भेद ( भिन्नता ) न होना—मार्गाभेद ही समता है । जिस मार्ग से प्रारम्भ किया है उसका त्याग न करना ( जारी रखना ) ही समता है । ऐसी समता श्लोक में एवं प्रबन्ध में भी होती है । इसका उदाहरण पहले दिया हुआ अर्थात् श्लेष के प्रसङ्ग में दिया उत्तर दिशा में आदि पद्य है । इसका विपरीत उदाहरण है—हे चण्डी ! खुश हो जाओ, क्रोध को जल्दी छोड़ो, यह जन तुम्हारे सामने अञ्जलि बाँध कर खड़ा है, क्यों तुमसे हिलते हुए मोटे मोटे दोनों स्तनों को विलास से हीन बनाकर बैठा जाता है । यहाँ खुश हो जाओ, छोड़ो, खड़ा है, आदि कर्तृवाचक क्रिया से आरम्भ किए गए श्लोक का 'बैठा जाता है' कह कर भाववाचक की क्रिया में समाप्त करना समता का विपर्यय है । अच्छा होता कि यहाँ तुम से बैठा जाता है के बदले 'तुम बैठती हो' कह दिया होता ॥ १२ ॥

**आरोहावरोहक्रमः समाधिः ॥ १३ ॥**

आरोहावरोहयोः क्रम आरोहावरोहक्रमः समाधिः परिहारः । आरोहस्यावरोहे सति परिहारः, अवरोहस्य वाऽऽरोहे सतीति ॥१३॥

तत्रारोहपूर्वकोऽवरोहो यथा—'निरानन्दः कौन्दे मधुनि परिभुक्तोज्झितरसे' ॥ ११ ॥

अवरोहपूर्वकस्त्वारोहो यथा—'नराः शीलभ्रष्टा व्यसन इव मज्जन्ति तरवः' ॥ १२ ॥

आरोहस्य क्रमोऽवरोहस्य च क्रम आरोहावरोहक्रमः । क्रमेणारोहणमवरोहणं चेति केचित् । यथा—'निवेशः स्वर्सिन्धोस्तुहिनगिरिवीथीषु जयति' ॥ १३ ॥

**कला** - पञ्चमं बन्धगुणं समाधिं लक्षयति—आरोहेत्यादिना—आरोहावरोहक्रमः समाधिः इति ।

आरोहावरोहक्रमः = आरोहस्य (उच्छ्रयस्य-दीर्घादिगुर्वक्षरप्राचुर्यबन्धस्य) अवरोहस्य (अवतरणस्य—लघ्वादिशिथिलप्रायबन्धस्य) च क्रमः ( पर्यायः )—आरोहावरोहयोः क्रमेण स्थितिः, समाधिः = समाधि गुणः इतिः ।

उक्तं व्याख्याति—आरोहेत्यादिना—आरोहावरोहयोः = दीर्घादिगुर्वक्षरप्रायबन्धस्य लघ्वादिशिथिलप्रायबन्धस्य च, तयोः क्रमः = पर्यायेण स्थितिः, परिहारः = अपनयनम् एके सत्यपरस्यः, समाधिः = समाधिगुणः, आरोहस्य = प्रवृत्तस्यारोहणस्य, अवरोहे सति = अवतरणे प्रवर्तमाने सति, परिहारः = त्यागः, अवरोहस्य = अवतरणस्य प्रवृत्तस्य, आरोहे-उच्छ्रये प्रवर्तमाने सति परिहार इति । तेन क्वचित्प्रथममारोहस्ततोऽवरोहः क्वचित्तु अवरोहपूर्वक आरोह इति द्वैविध्यं समतायाः ।

तत्र आरोहपूर्वकावरोहमुदाहरति निरानन्देत्यादि—परिभुक्तोज्झितरसे कौन्दे मधुनि निरानन्दः इति । परिभुक्तोज्झितरसे = पूर्वंभुक्तः ( आस्वादितः ) पश्चात् उज्झितः ( अवशेषरूपेण त्यक्तः ) रसः ( सारवस्तु ) यस्मिन्, कौन्दे = कुन्दपुष्पसम्बन्धिनि, मधुनि = मकरन्दे, निरानन्दः = प्रमोदाभावः इति । अत्र 'निरानन्दः कौन्दे' इति पूर्वभागे गुर्वक्षरप्राचुर्यादारोहः, मधुनि'

इत्यत्र लघ्वक्षरवाहुल्यादवरोह इति ॥ ११ ॥

एवञ्चावरोहपूर्वकमारोहमुदाहरति नरा इत्यादि—तरवः शीलभ्रष्टाः नराः इव व्यसने मज्जन्ति इति । तरवः = वृक्षाः, शीलभ्रष्टाः = आचार-पतिताः, नराः = मनुष्याः, इव, व्यसने = दुःखे, पङ्के, मज्जन्ति = पतन्ति इति । अत्र नरा इत्यत्र लघ्वक्षरशैथिल्यादिनाऽवरोहः, शीलभ्रष्टाः इत्यत्र गुर्वक्षरप्राचुर्यादारोह इति ॥ १३ ॥

आरोहस्य ( दैर्घ्यादेः ) क्रमः अवरोहस्य (लाघवादेः) च क्रमः (पर्यायः) क्रमेण = पर्यायेण आरोहणम् = उच्छ्रयः अवरोहणम् = अवतरणम् च इति, केचित् = केचन विद्वांसः । तस्योदाहरणं निवंश इत्यादि—स्वर्सिन्धोः तुहिन-गिरिवीथीषु निवेशः जयति इति । स्वर्सिन्धोः = स्वर्णद्याः, तुहिनगिरि-वीथीषु = हिमपर्वतश्रेणिषु, निवेशः = विन्यासः जयति = सर्वोत्कृष्टत्वेन वर्तत इति । अत्र निवेशः स्वर्सिन्धोरित्यत्रारोहः, तुहिनगिरि इत्यत्रावरोह इति ॥ १३ ॥

**प्रतिकला**—पाँचवें बन्धगुण 'समाधि' को वताते हैं—

"आरोह एवं अवरोह का क्रम समाधि है ।"

आरोह एवं अवरोह का क्रम—आरोहावरोहक्रम जिसके एक के रहने पर दूसरे का परिहार होता है समाधि है । आरोह के रहने पर अवरोह का परिहार होता है, अवरोह के रहने पर आरोह का परिहार होता है । आरोहपूर्वक का अवरोह जैसे— उपभोग के वाद छोड़े गए रस से युक्त कुन्द पुष्प के मकरन्द में आनन्द का अभाव... ।

अवरोहपूर्वक का आरोह-जैसे—पेड़ शील से पतित मनुष्यों की तरह व्यसन ( कीचड़ ) में गिरते हैं ।

किसी के विचार में तो आरोह का क्रम, अवरोह का क्रम आरोहावरोह क्रम है अतः क्रम से ही आरोह एवं अवरोह होते है । जैसे—स्वर्गङ्गा का हिमालय की श्रेणियों में निवेश सर्वोत्कृष्ट है ॥ १३ ॥

**न पृथगारोहावरोहयोरोजःप्रसादरूपत्वात् ॥१४॥**

न पृथक्समाधिर्गुणः आरोहावरोहयोरोजःप्रसादरूपत्वात् । ओजोरूपश्चारोहः प्रसादरूपश्चावरोह इति ॥१४॥

**कला**—यदि आरोहावरोहपर्यायत्वमेव समाधेरंशगन्तदा तस्यौजःप्रसादानतिरेकत्वम् तेन न पृथक्त्वमित्याशङ्कामुपस्थापयति नेत्यादिना—आरोहावरोहयोः ओजःप्रसादरूपत्वात न पृथक् इति ।

आरोहावरोहयोः = उच्छ्रयावतरणयोः, ओजःप्रसादरूपत्वात् = क्रमेण आरोहस्य ओजोरूपत्वात अवरोहस्य प्रसादरूपत्वात् च, न पृथक् समाधिगुण इति शङ्का ।

तमेव विशदयति नेत्यादिना आरोहावरोहयोः = दैर्घ्यलाघवप्राचुर्ययोः ओजःप्रसादरूपत्वात् = ओजोरूपःआरोहः प्रसादरूपश्च अवरोह इति समाधिगुणः, न पृथक् । आरोहावरोहयोरोजःप्रसादयोरन्तर्भावान्नैव पृथक् समाधिगुण इति ।।१४।।

**प्रतिकला**—आरोह एवं अवरोह का ओज एवं प्रसाद रूप होने से उनसे भिन्न कोई अलग समाधि गुण नहीं है ।

आरोह के ओज अवरोह के प्रसाद रूप होने से समाधि गुण पृथक् नहीं है ।। १४ ।।

**न संपृक्तत्वात् ।।१५।।**

**यदुक्तमोजःप्रसादरूपत्वमारोहावरोहयोस्तन्न । सम्पृक्तत्वात् । सम्पृक्तौ खल्वोजःप्रसादौ नदीवेणिकावद् वहतः ।।१५।।**

**कला**—समाधेरोजःप्रसादाभ्यां पृथक्त्वमुपपादयति—नेत्यादिना—सम्पृक्तत्वात् न इति ।

संपृक्तत्वात् = ओजःप्रसादयोरपरिहार्यरूपेण संयुक्तत्वात्, न = वारोहावरोहयोरोजःप्रसादरूपत्वम् नैव तयोः परस्परपरिहारत्वात् इति ।

तमेव व्याख्याति–यदुक्तमित्यादि । आरोहावरोहयोः = उभयोः, ओजःप्रसादरूपत्वम् = ओजःप्रसादयोरन्तर्भावः, यत्, उक्तम् = कथितम्, तत्, न = नैव युक्तिसङ्गतम् । सम्पृक्तत्वात् = संयुक्तत्वात् । सम्पृक्तौ = संयुक्तौ, खलु, ओजः प्रसादौ = गाढबन्धत्वशिथिलबन्धत्वलक्षणौ, गुणौ, नदीवेणिकावत् = संयुक्तसरिताद्वयजलप्रवाहवत्, वहतः = चलतः इति । आरोहावरोहौ नौजःप्रसादरूपौ किञ्चौजःप्रसादौ संयुक्तनदीजलवत् सम्पृक्तत्वेन वहतः आरोहावरोहौ तुपरस्परपरिहारेणेत्याशयः ।। १५ ।।

**प्रतिकला**—संयुक्त होने से नहीं।

आरोह एवं अवरोह का जो ओज एवं प्रसाद रूप कहा गया वह ठीक नहीं। ओजः एवं प्रसाद के संयुक्त होने से। संयुक्त ओज एवं प्रसाद संयुक्त बने दो नदियों के धारा की तरह अविभक्त होकर चलते हैं जबकि आरोह एवं अवरोह एक के वाद दूसरा ही ॥ १५ ॥

**अनैकान्त्याच्च ॥ १६ ॥**

न चायमेकान्तः। यदोजस्यारोहः प्रसादे चावरोहः ॥ १६ ॥

**कला**—युक्त्यन्तरेण आरोहावरोहयोरोजःप्रसादातिरिक्ततां सम्पादयति अनैकान्त्यादित्यादिना—अनैकान्त्यात् च।

अनैकान्त्यात्=एकान्तताभावात्, च=नारोहावरोहयोरोजःप्रसादयोरन्तर्भावः इति।

उक्तं विशयति—नेत्यादिना। न च=नैव च, अयम्, एकान्तः=अनिवार्यता, यत्, ओजसि=ओजोगुणे, आरोहः=उच्छ्रयः, प्रसादे=प्रसादगुणे च, अवरोहः=अवतरणम् इति। ओजस्यारोहस्य प्रसादेऽवरोहस्य चान्तर्भावो नैकान्तिकस्तयोरभावेऽपि तयोः स्थितित्वात्। अत ओजःप्रसादयोरारोहावरोहसाहचर्यनियमोः नैवेति। तत्र व्यभिचारात् आरोहरहितस्यौजसो वाहुल्येन प्रयोगस्तथैवावरोहरहितप्रसादस्यापि। उदाहरणे यथा कामधेनुटीकायाम्—उद्गच्छदच्छसुभगच्छविगुच्छकच्छम्' इत्यारोहशून्यस्योजसः, यतो यतो निवर्तते ततस्ततो विमुच्यत इत्यवरोहशून्यस्य प्रसादस्य ॥ १६ ॥

**प्रतिकला**—ऐकान्तिक न होने से भी।

यह कोही एकान्त अनिवार्य नहीं है कि ओज में आरोह एवं प्रसाद में अवरोह रहे ही। विना आरोह का ओज एवं विना अवरोह का प्रसाद सर्वत्र पाए जाते हैं। अतः आरोह एवं अवरोह का ओज एवं प्रसाद में अन्तर्भाव नहीं ॥ १६ ॥

**ओजःप्रसादयोः क्वचिद्भागे तीव्रावस्थायां ताविति चेदभ्युपगमः ॥ १७ ॥**

**ओजःप्रसादयोः क्वचिद्भागे तीव्रावस्थायामारोहोऽवरोहश्चेत्येवं चेन्मन्यसे, अभ्युपगमः—न विप्रतिपत्तिः ॥१७॥**

**कला**—युक्त्यन्तरं प्रदर्शयति—ओज इत्यादिना । ओजःप्रसादयोः तीव्रावस्थायाम् क्वचित् भागे तौ इति चेत् अभ्युपगमः इति ।

ओजःप्रसादयोः=तथोक्तगुणयोः, तीव्रावस्थायाम्=चरमोत्कर्षवेलायाम्, क्वचिद्भागे=कुत्रचिदेवांशे, तौ=आरोहावरोहौ भवतः, इति चेत्, अभ्युपगमः=स्वीकार एव तथाभूते सति समाधेरस्तित्वसमर्थनात् इति ।

तं विशिनष्टि—ओजःइत्यादिना । ओजःप्रसादयोः=गाढबन्धत्वशिथिलबन्धत्वलक्षणयोः गुणयोः, क्वचिद्भागे=कस्मिंश्चिदेवांशे, तीव्रावस्थायाम्=चरमप्रकर्षवेलायाम्, क्रमेण, आरोहः=उच्छ्रयः, अवरोहः=अवतरणम् इति एवम्, मन्यसे चेत्=इत्येवं स्वीक्रियते, तदा अभ्युपगमः=नैव विप्रतिपत्तिः, नैव विरोधः इति । यदि तथाविधयोरोजःप्रसादयोः कस्मिंश्चिचदेवांशे तीव्रोत्कर्षसमये एवारोहावरोहयोः स्थितिरितिचेत्साधु किञ्च तयोः सामान्यावस्थायां बहुविधभागे तु आरोहावरोहयोरनुपस्थितिः स्वीकृतैव । तदा समाधेरस्तित्वं स्वत एव प्रमाणितमिति ॥ १७ ॥

**कला**—ओज एवं प्रसाद के तीव्रोत्कर्ष की अवस्था में किसी भाग में ही आरोह एवं अवरोह होने की बात हो तो स्वीकार्य है ।

ओज एवं प्रसाद के किसी भाग में तीव्र अवस्था में आरोह एवं अवरोह होने की बात यदि माननी हो तो स्वीकार है, कोई आपत्ति नहीं ( तब तो इससे समाधि का पृथक् अस्तित्व माना ही गया ) ॥ १७ ॥

**विशेषापेक्षित्वात्तयोः ॥ १८ ॥**

**स विशेषो गुणान्तरात्मा ॥ १८ ॥**

**कला**—तत्पर्यवसितार्थं समर्थयति—विशेषेत्यादिना—तयोः विशेषापेक्षित्वात् इति ।

तयोः=आरोहावरोहयोः, विशेषापेक्षित्वात्=विशेषः ( तीव्रावस्थात्मा ) तस्य अपेक्षिणौ ( आकांक्षिणौ ) तयोर्भावः तस्मात्=तीव्रावस्थाकांक्षित्वात् ।

तमेव सङ्केतयति—स इत्यादिना-सः=सूत्रोक्तः, विशेषः=विशिष्टतायुत एव, गुणान्तरात्मा=बन्धगुणः—समाधिरिति। आरोहावरोहौ विशेषापेक्षिणौ स विशेषश्च गुणान्तरमेव तत्तु समाधिरेवेति ॥ १८ ॥

**प्रतिकला**—उन दोनों के विशेष अवस्था की अपेक्षा रखने वाले होने से।

वह विशेष ही दूसरा गुण अर्थात् समाधि गुण है जो कि ओज एवं प्रसाद गुण से भिन्न है ॥ १८ ॥

**आरोहावरोहनिमित्तं समाधिराख्यायते ॥ १९ ॥**

आरोहावरोहक्रमः समाधिरिति गौण्या वृत्त्या व्याख्येयम् ॥१९॥

**कला**—तयोर्गौणवृत्याश्रयत्वं निर्दिशति—आरोहेत्यादिना—समाधिः आरोहावरोहनिमित्तम् आख्यायते इति।

समाधिः=समाधिगुणः, आरोहावरोहनिमित्तम्=आरोहावरोहकारणम्, आख्यायते=कथ्यते इति।

तमेव स्पष्टयति—आरोहेत्यादिना-आरोहावरोहक्रमः=आरोहावरोह-क्रमव्यवस्था—प्रथममारोहस्ततश्चादवरोहो वा प्रथममवरोहस्ततपश्चादारोह इति परिहारात्मकक्रमः, समाधिः=समाधिगुण इति, गौण्या=लक्षणया, वृत्या=शब्दशक्त्या, व्याख्येयम्=अवधार्यमिति ॥ १९ ॥

**प्रतिकला**—आरोह एवम् अवरोह का निमित्त समाधि कहलाता है। आरोह एवं अवरोह का जो क्रम है वही समाधि है ऐसा गौणी वृत्ति अर्थात् लक्षणा शक्ति से व्याख्या करनी चाहिए ॥ १९ ॥

**क्रमविधानार्थत्वाद्वा ॥ २० ॥**

पृथक्करणमिति। पाठधर्मत्वं च न सम्भवतीति 'न पाठधर्माः सर्वत्रादृष्टेः' इत्यत्र वक्ष्यामः ॥ २० ॥

**कला**—ओजःप्रसादयोरारोहावरोहापेक्षा नैवापि भवेत् किन्तु आरोहा-वरोहयोस्तदपेक्षा सम्भवति इत्याशङ्कानिरासायाह—क्रमेत्यादिना—क्रम-विधानार्थत्वात् वा-इति—

क्रमविधानार्थत्वात् = क्रमेणारोहणं क्रमेणावरोहञ्चेत्येवंविधक्रमनियमन-प्रयोजनत्वात् (नैव च परस्परक्रमनियमनाशयत्वात्) वा समाधेर्गुणत्वमिति।

तमेव विशदयति—पृथक्करणमिति। पृथक्करणम् = क्रमविधानन्तु पृथक्करणायैव। आरोहावरोहक्रमः पाठधर्मत्वम् च न सम्भवति इति 'न पाठधर्माः सर्वत्रादृष्टेः' इति सूत्रप्रकरणे, वक्ष्यामः = कथयिष्यामः इति ॥ २० ॥

**प्रतिकला**—अथवा आरोह एवं अवरोह के क्रम विधान के अर्थत्व से भी समाधि एक गुण होता है। क्रम विधान का आशय आरोह एवं अवरोह को पृथक् करना है। यह पाठ का धर्म नहीं हो सकता। इसको न पाठधर्मा··· आदि प्रकरण में बताएँगे ॥ २० ॥

**पृथक्पदत्वं माधुर्यम् ॥ २१ ॥**

बन्धस्य पृथक्पदत्वं यत् तन्माधुर्यम् पृथक्पदानि यस्य स पृथक्पदः। तस्य भावः पृथक्पदत्वम्। समासदैर्घ्यनिवृत्तिपरं चैतत्। पूर्वोक्तमुदाहरणम् ॥ २१ ॥ विपर्ययस्तु यथा—'चलितशबरसेनादत्त-गोशृङ्गचण्डध्वनिचकितवराहव्याकुला विन्ध्यपादाः' ॥ १४ ॥

**कला**—षष्ठं बन्धगुणं माधुर्यं लक्षयति—पृथगित्यादिना-पृथक्पदत्वम् माधुर्यम् इति।

पृथक्पदत्वम = पदानां पृथक्पृथगवस्थितिः, असमस्तत्वमल्पसमस्तत्वं वा, माधुर्यम् = माधुर्यगुण इति।

उक्तं स्पष्टयति—बन्धस्येत्यादिना-बन्धस्य = पदरचनाया, यत् पृथक्पदत्वम् = पृथक् ( असंयुक्तानि ) एव पदानि ( सुप्तिङन्तानि ) यस्य सः पृथक्पदस्तस्य भावः पृथक्पदत्वम्, समासदैर्घ्यनिवृत्तिपरम् = दीर्घक्लिष्टसमास निवारणपरायणम्, एतत् = पृथक्पदं न तु समासनिषेधपरम्, तत् = तादृशम्, माधुर्यम् = माधुर्यगुण इति।

पूर्वोक्तम् अस्त्युत्तरस्यामित्यादिपदम् उदाहरणम्। अत्र अस्ति उत्तरस्यां दिशि नाम इति पृथक्पदानि, देवतात्मा हिमालयः नगाधिराज इति लघुसमस्तपदानि। विपर्ययः = तद्व्यतिक्रमस्तु यथा—चलितेत्यादि—चलितेति = चलिता ( चलनशीला ) या शवराणाम् ( भिल्लानाम् ) सेना ( चमूः ) तया आदत्तम् ( धृतम् ) यत् गोशृङ्गम् (वाद्यविशेषः) तस्य यः चण्डः (उग्रः)

ध्वनिः ( शब्दः ) तेन चकितैः ( त्रस्तैः ) वराहैः ( सूकरप्रभृतिवन्यजन्तुभिः व्याकुलाः (समाकुलाः), विन्ध्यपादाः = विन्ध्यप्रत्यन्तपर्वतश्रेणयः इति ॥२१॥

**प्रतिकला**—पृथक् पृथक् पदों का होना माधुर्य है। बन्ध में पृथक् पृथक् रहे पदों का होना जो है वह माधुर्य गुण होता है। पृथक् पृथक् पद हैं जिसके वह है पृथक्पद उसका भाव पृथक्पदत्व है। यह समास की दीर्घता के निवारणपरक है अर्थात् इसमें लम्बे समास अभीष्ट नहीं हैं, छोटे-छोटे समास ग्राह्य हैं। इसका उदाहरण है पूर्वोक्त 'उत्तर दिशा में' आदि पद्य हैं। विपर्यय तो है जैसे—चले हुए शबरों की सेना से धारण किए गए गोश्रृङ्ग ( वाद्य विशेष ) के भयावह शब्द से डरे हुए वनसूअरों से व्याप्त विन्ध्य पर्वत के नीचे की पहाड़ियाँ ॥ २१ ॥

**अजरठत्वं सौकुमार्यम् ॥ २२ ॥**

बन्धस्याजरठत्वमपारुष्यं यत् तत् सौकुमार्यम् ॥ २२ ॥ पूर्वोक्त-मुदाहरणम्। विपर्ययस्तु यथा—

'निदानं निर्द्वैतं प्रियजनसदृक्त्वव्यवसितिः।
सुधासेकप्लोषौ फलमपि विरुद्धं मम हृदि' ॥ १५ ॥

**कला**—सप्तमं बन्धगुणं सौकुमार्यमभिवक्ति—अजरठत्वमित्यादिना-अजरठत्वम् = परुषताहीनत्वम्, सौकुमार्यम् = सौकुमार्यगुणः इति।

सूत्रार्थं विविङ्क्ते—बन्धस्येत्यादिना—बन्धस्य = पदरचनायाः, यत् अजरठत्वम् = अपारुष्यम् रूक्षत्वाभावः, तत्, सौकुमार्यम् = सौकुमार्यगुण इति

पूर्वोक्तम् अस्त्युत्तरस्यामिति पद्यम् उदाहरणम्। अत्र अस्ति उत्तरस्यां दिशि देवतात्मा हिमालयः नाम नगाधिराज इति सर्वेष्वेव पदेषु सौकुमार्यं विद्यते परुषवर्णयुतपदाभावात्।

विपर्ययः = तद्व्यतिक्रमस्तु यथा निदानमित्यादि-प्रियजनसदृक्त्वव्यवसितिः, निर्द्वैतम् निदानम् सुधासेकप्लोषौ मम हृदि फलम् अपि विरुद्धम् इति।

प्रियजनसदृक्त्वव्यवसितिः = अभीष्टजनतुल्यव्यवसायः, निर्द्वैतम् = निःसंशयमेव कष्टप्रदम्, निदानम् = कारणं भवति, मम = मे, हृदि = मनसि,

सुधासेकप्लोषौ=अमृताप्लावनदाहौ-मिलने सुधासेकी विरहे प्लोषश्च, विरुद्धम्=विपरीतम्, फलमिति ॥ २२ ॥

**प्रतिकला**—जरठता का न होना माधुर्य है।

बन्ध में रुखेपन का न होना जो है वह सौकुमार्य है। उदाहरण पहले ही दिया गया है, उत्तर दिशा में आदि···। इसमें सभी पदों में कडे लगने वाले वर्ण से युक्त पद नहीं हैं। अतः माधुर्य गुण है। इसका प्रत्युदाहरण है निदानम् आदि जिसमें कडे वर्णों का प्रयोग है ॥ २२ ॥

**विकटत्वमुदारता ॥ २३ ॥**

बन्धस्य विकटत्वं यदसावुदारता। यस्मिन् सति नृत्यन्तीव पदानीति जनस्य वर्णभावना भवति तद्विकटत्वम्। लीलायमानत्वमित्यर्थः ॥ २३ ॥ यथा—

'स्वचरणविनिविष्टैर्नूपुरैर्नर्तकीनां झणिति रणितमासीत् तत्र चित्रं कलं च' ॥ १६ ॥ न पुनः—

'चरणकमललग्नैर्नूपुरैर्नर्तकीनां झटिति रणितमासीन्मञ्जु चित्रं च तत्र' ॥ १७ ॥

**कला**—अष्टमं वन्धगुणमुदारतां लक्षयति—विकटत्वमित्यादिना-विकटत्वम् उदारता इति—

विकटत्वम्=पदानां नृत्यत्प्रायत्वम्, उदारता=उदारतागुणः। सूत्रोक्तं विविङ्क्ते—बन्धस्येत्यादिना—बन्धस्य=पदरचनायाः, यत् विकटत्वम्=यस्मिन् सति पदानि सुप्तिङन्तानि, नृत्यन्ति=नटन्ति इव, जनस्य=दर्शकस्य, पाठकस्य वा, वर्णभावना=चित्तवृत्तिः, भवति, तत्—लीलायमानत्वम्, असौ उदारता=उदारतागुणः इति। उदाहरत्युदारतां स्वचरणेत्यादिना—तत्र नर्तकीनाम् स्वचरणविनिविष्टैः नूपुरैः झणिति रणितम् चित्रम् कलम् च आसीत् इति। तत्र, नर्तकीनाम्=नृत्याङ्गनानाम्, स्वचरणविनिविष्टैः=निजपादसंन्यस्तैः, नूपुरैः=मञ्जीरैः, चित्रम्=अद्भुतम्, कलम्=मधुरम्, झणिति=खणखणायितम्, रणितम्=क्वणितम्, च आसीदिति।

विपर्ययं प्रस्तौति न पुनः=नैव च चरणेत्यादि—तत्र नर्तकीनाम्, चरणकमललग्नैः नूपुरैः मञ्जु चित्रम् च रणितम् झटिति आसीत् इति अर्थस्तु पूर्ववदेव। अत्रोदारताभावो लीलायमानत्वाभावात् ॥ २३ ॥

**प्रतिकला**—आँठवें बन्ध गुण 'उदारता' का लक्षण करते हैं—"विकटत्व उदारता है।"

पदरचना का विकटत्व जो है वही उदारता है। जिसके रहने पर लोगों की भावना ऐसी बनती है कि जैसे पद नाच रहे हैं वही विकटत्व है। 'लीला करने का भाव' इसका अर्थ है।

जैसे—वहाँ नर्तकियों के अपने-अपने चरणों में धारण किए हुए नूपुरों से झनझन की अनोखी एवं मीठी आवाज आ रही थी।

न कि ऐसा—

वहाँ नर्तकियों के चरणरूपी कमलों में लगे नूपुरों से मीठी एवं अनूखी आवाज तुरत निकली ॥ २३ ॥

**अर्थव्यक्तिहेतुत्वमर्थव्यक्तिः ॥ २४ ॥**

यत्र झटित्यर्थप्रतिपत्तिहेतुत्वं स गुणोऽर्थव्यक्तिरिति। पूर्वोक्तमुदाहरणम्। प्रत्युदाहरणं तु भूयः सुलभं च ॥ २४ ॥

**कला**—नवमं बन्धगुणमर्थव्यक्ति लक्षयति—अर्थेत्यादिना-अर्थव्यक्तिहेतुत्वम् अर्थव्यक्तिः इति।

अर्थव्यक्तिहेतुत्वम्=अर्थस्य (अभिधेयस्य) व्यक्तिः (प्रतीतिः) तस्याः हेतुत्वम् (निदानत्वम्), अर्थव्यक्तिः=अर्थव्यक्तिगुण इति। उक्तं विशदयति—यत्रेत्यादिना यत्र, झटित्यर्थप्रतिपत्तिहेतुत्वम्=झटित्यभिधेयप्रतीतिकारणत्वम्, स गुणः अर्थव्यक्तिः इति। पूर्वोक्तम्=पूर्वकथितम् अस्त्युत्तरस्यामित्यादि उदाहरणम्। प्रत्युदाहरण=विपर्ययस्तु, भूयः=बहुधा, सुलभम्=प्राप्यम् एव इति ॥ २४ ॥

**प्रतिकला**—अर्थ की स्पष्टता के कारण का होना अर्थव्यक्ति है। जहाँ तुरत ही अर्थ की प्रतिपत्ति होने का कारण है वह गुण अर्थव्यक्ति है।

उदाहरण पहले दिया गया 'उत्तर दिशा में'''आदि पद्य हैं। प्रत्युदाहरण तो सर्वत्र ही सुलभ है ॥ २४ ॥

**औज्ज्वल्यं कान्तिः ॥ २५ ॥**

बन्धस्यौज्ज्वलत्वं नाम यदसौ कान्तिरिति । यदभावे पुराणच्छायेत्युच्यते ॥ २५ ॥ यथा - 'कुरङ्गीनेत्रालीस्तवकितवनालीपरिसरः, ॥ १८ ॥ विपर्ययस्तु भूयान् सुलभश्च ॥ २५ ॥

**कला**—दशमं बन्धगुणं कान्तिं लक्षयति–औज्ज्वल्यमित्यादिना । औज्ज्वल्यम्=दीप्तत्वम्, कान्तिः=कान्तिगुणः इति ।

सूत्रार्थं स्पष्टयति बन्धस्येत्यादिना । बन्धस्य=पदरचनायाः, यत् औज्ज्वल्यम्=दीप्तत्वम्, नाम, असौ, कान्तिः=कान्तिगुणः । यदभावे=यस्य (औज्ज्वल्यस्य) अभावे (विरहे), पुराणच्छाया=प्राचीनानुवादः इति उच्यते ।

उदाहरणं यथा-कुरङ्गीत्यादि-कुरङ्गीणाम् (मृगीणाम्) नेत्राल्या (नयन पङ्क्त्या) स्तवकितः (गुच्छितः) वनालीपरिसरः (काननश्रेणिः) इति । विपर्ययः=व्यतिक्रमस्तु, भूयान्=प्राशस्त्येन, सुलभः=सुप्राप्यश्चेति ॥२५॥

**प्रतिकला**—दशवें बन्धगुण कान्ति का लक्षण करते हैं--

उज्वलता कान्ति है ।

बन्ध का उजलापन जो है यही कान्तिगुण है । जिसके अभाव में रचना पुरानी पड़ती है। जैसे कुरङ्गी (मृगी) के नेत्रालियों (आँखों) से स्तवकित (गुच्छ खिले) वनाली परिसर (वन पंक्ति) आदि । इसके विपर्यय तो अनेक मिलते हैं ॥ २५ ॥

श्लोकाश्चात्र भवन्ति—

**पदन्यासस्य गाढत्वं वदन्त्योजः कवीश्वराः ।**
**अनेनाधिष्ठिताः प्रायः शब्दाः श्रोत्ररसायनम् ॥**

**कला**—पदेत्यादि-कवीश्वराः पदन्यासस्य गाढत्वम् ओजः वदन्ति अनेन अधिष्ठिताः शब्दाः प्रायः श्रोत्ररसायनम् इति ।

कवीश्वराः = श्रेष्ठकवयः, पदन्यासस्य = सुप्तिङन्तविन्यसनस्य, गाढत्वम् = दार्ढ्यम्, ओजः = ओजोगुण इति, वदन्ति = कथयन्ति, अनेन = ओजोगुणेन, अधिष्ठिताः = उद्भासिताः, शब्दाः = अभिधानानि, प्रायः = बहुधा, श्रोत्ररसायनम् = श्रुतिमहौषधम् ( मधुरम् ) भवन्ति इति।

**प्रतिकला** – श्रेष्ठ कवि पदों के विन्यास की गाढ़ता को ओजः गुण कहते हैं। इससे युक्त शब्द प्रायः सुनने में अच्छे लगने वाले होते हैं।

**श्लथत्वमोजसा मिश्रं प्रसादं च प्रचक्षते।**
**अनेन न विना सत्यं स्वदते काव्यपद्धतिः॥**

**कला**—श्लथत्वमित्यादि-ओजसा मिश्रम् श्लथत्वम् च प्रसादम् प्रचक्षते अनेन विना काव्यपद्धतिः सत्यं न स्वदते इति।

ओजसा = ओजोगुणेन, मिश्रम् = सम्पृक्तम्, श्लथत्वम् = वन्धगतशैथिल्यम्, प्रसादम् = प्रसादगुणम्, प्रचक्षते = कथयन्ति, अनेन = प्रसादगुणेन, विना, काव्यपद्धतिः = कविकृतिवर्त्म, सत्यम् = यथार्थरूपेण, न स्वदते = न रुचिकरा भवति इति।

**प्रतिकला**—वन्ध की ओज गुण से संयुक्त शिथिलता को प्रसाद गुण कहते हैं इसके विना काव्य रचना ठीक से रुचिकर नहीं होती है।

**यत्रैकपदवद्भावः पदानां भूयसामपि।**
**अनालक्षितसन्धीनां स श्लेषः परमो गुणः॥**

**कला**—यत्रेत्यादि–यत्र भूयसाम् अपि अनालक्षितसन्धीनाम् पदानाम् एकपदवद्भावः स श्लेषः परमः गुण इति।

यत्र = यस्मिन् बन्धे, भूयसाम् = अनेकेषाम्, अपि, अनालक्षितसन्धीनाम् = अदृष्टवर्णद्वयजातवर्णविकारभेदानाम्,–अकृताचादिसन्धीनाम्, पदानाम् = सुप्तिङन्तानाम् एकपदवद्भावः = एकपदभवनम्, समानपदतुल्यस्थितिः सः = तादृशः, श्लेषः = श्लेषाख्यः, परमः = सर्वोत्कृष्टः, गुणः = काव्यशोभाकरधर्मः भवति इति।

**प्रतिकला**—जहाँ सन्धि के नियमों से न जुड़े एक से अधिक पदों की एक पद जैसी स्थिति होती है वह श्लेष नामक उत्कृष्ट गुण है।

**प्रतिपादं प्रतिश्लोकमेकमार्गपरिग्रहः ।**
**दुर्बन्धो दुर्विभावश्च समतेति मतो गुणः ।।**

**कला**—प्रतिपादमित्यादि—प्रतिपादम् प्रतिश्लोकम् एकमार्गपरिग्रहः दुर्विभावः दुर्बन्धः च समता इति गुणः मत इति ।

प्रतिपादम्=पादं पादम्,–प्रत्येकचरणे, प्रतिश्लोकम्=श्लोकं श्लोकम्-प्रत्येकश्लोके, एकमार्गपरिग्रहः=समानवर्त्मनिर्वाहः, दुर्विभावः=दुःखेन एव बोध्यः, दुर्बन्धः=कठिनरचना, समता इति गुणः मतः=व्यवहृत इति ।

**प्रतिकला**—जहाँ प्रत्येक चरण में वा श्लोक में समान रीति का निर्वाह होता है [ जिस क्रम से प्रारम्भ किया उसी क्रम में ही समाप्ति की जाती है ] वैसे कठिनाई से मात्र समझ में आने वाली कठिन रचना समता गुण वाली मानी जाती है ।

**आरोहन्त्यवरोहन्ति क्रमेण यतयो हि यत् ।**
**समाधिर्नाम स गुणस्तेन पूता सरस्वती ।।**

**कला**—आरोहेत्यादि-यत् यतयः क्रमेण आरोहन्ति अवरोहन्ति च स समाधिः नाम गुणः तेन सरस्वती पूता इति ।

यत्, यतयः=विरामाः, पादाः, क्रमेण=पर्यायेण, आरोहन्ति=उद्गच्छन्ति, अवरोहन्ति=अवतरन्ति च स हि, समाधिः इति नाम गुणः, तेन=समाधिगुणेन, सरस्वती=वाणी, पूता=पवित्रिता, भवति ।

**प्रतिकला**—जो कि यतियाँ क्रम से चढ़ती हैं और उतरती हैं वह समाधि नाम का गुण है । उससे कविता पवित्र हो जाती है ।

**बन्धे पृथक्पदत्वं च माधुर्यमुदितं बुधैः ।**
**अनेन हि पदन्यासाः कामं धारामधुच्युताः ।।**

**कला**—बन्ध इत्यादि–वन्धे पृथक्पदत्वम् वुधैः च माधुर्यम् उदितम् अनेन पदन्यासाः कामम् धारामधुच्युताः हि इति ।

वन्धे=पदरचनायाम्, पृथक्पदत्वम्=पदानां पार्थक्येन विन्यासः, बुधैः=काव्यविद्भिः चादितरैरपि, माधुर्यम्=माधुर्यगुणः, उदितम्=

कथितम्, अनेन = माधुर्येण, पदन्यासाः = सुप्तिङन्तविन्यासाः, कामम् = नितान्तम्, धारामधुच्युताः = मधुधारास्यन्दिताः इति ।

**प्रतिकला**—काव्यबन्ध में पृथक् पृथक् पदों का होने को विद्वानों ने माधुर्य गुण कहा है। इससे पदों का विन्यास मधु की धारा से निकले जैसे होते हैं।

**यथा हि च्छिद्यते रेखा चतुरं चित्रपण्डितैः ।**
**तथैव वागपि प्राज्ञैः समस्तगुणगुम्फिता ॥**

**कला**—यथेत्यादि–यथा चित्रपण्डितैः रेखा चतुरम् छिद्यते हि तथैव प्राज्ञैः अपि समस्तगुणगुम्फिता वाक् क्रियते इति ।

यथा = येन प्रकारेण, चित्रपण्डितैः, चित्रणकलाकोविदैः, रेखा = चित्रगतरेखा, चतुरम् = निपुणतया, छिद्यते = आकृष्यते, तथैव = तेनैव प्रकारेण, प्राज्ञैः = कविभिः, समस्तगुणगुम्फिता = समग्रबन्धगुणनिबद्धा, वाक् = सरस्वती–काव्यम्, क्रियत इति ।

**प्रतिकला**—जैसे चतुर चित्रकार बड़ी चतुराई से चित्र की रेखा खींचता है वैसे ही चतुर कवि भी समस्त गुणों में गुम्फित काव्य की रचना करता है।

**बन्धस्याजरठत्वं च सौकुमार्यमुदाहृतम् ।**
**एतेन वर्जिता वाचो रुक्षत्वान्न श्रुतिक्षमाः ॥**

**कला**—बन्धस्येत्यादि–बन्धस्य अजरठत्वम् सौकुमार्यम् उदाहृतम् एतेन वर्जिताः वाचः रुक्षत्वात् श्रुतिक्षमाः न इति ।

बन्धस्य = पदरचनायाः, अजरठत्वम् = अपारुष्यम्–कोमलता, सौकुमार्यम् = सौकुमार्यगुणः उदाहृतम् = कथितम्, एतेन = सौकुमार्यगुणेन, वर्जिताः = त्यक्ताः, वाचः = वचनानि-काव्यम्, रुक्षत्वात् = परूषत्वात् श्रुतिक्षमाः = श्रवणयोग्याः, न = नैव भवन्ति इति ।

**प्रतिकला**—बन्ध ( काव्य रचना ) की अपरुषता ( कोमलता ) को सौकुमार्य गुण कहा जाता है। इसके विना काव्य सुनने में योग्य नहीं रहता।

**विकटत्वं च बन्धस्य कथयन्ति ह्युदारताम् ।**
**वैचित्र्यं न प्रपद्यन्ते यया शून्याः पदक्रमाः ।।**

**कला**—बन्धस्य विकटत्वम् च उदारताम् कथयन्ति हि यया शून्याः पदक्रमाः वैचित्र्यम् न प्रपद्यन्ते इति ।

बन्धस्य=पदरचनायाः, विकटत्वम्=लीलायमानत्वम्, उदारताम्-उदारतागुणम्, कथयन्ति=निगदन्ति, हि, यया=उदारतया, शून्याः=विरहिताः, पदक्रमाः=पदविन्यासाः, वैचित्र्यम्=चमत्कारित्वम् न प्रपद्यन्ते=न प्राप्नुवन्ति इति ।

**प्रतिकला**—पद रचना का विकटत्व-पदों के नाचने से दिखाई पड़ने को उदारता गुण कहते हैं जिसके बिना पदों का क्रम चमत्कारी बन नहीं पाता है ।

**पश्चादिव गतिर्वाचः पुरस्तादिव वस्तुनः ।**
**यत्रार्थव्यक्तिहेतुत्वात् सोऽर्थव्यक्तिः स्मृतो गुणः ।।**

**कला**—पश्चादित्यादि-यत्र अर्थव्यक्तिहेतुत्वात् वाचः गतिः पश्चात् इव वस्तुनः गतिः पुरस्तात् इव स गुणः अर्थव्यक्तिः स्मृतः इति ।

यत्र=यस्मिन्बन्धे, अर्थव्यक्तिहेतुत्वात्=स्पष्टरूपेण अर्थाविबोधनकारणत्वात्, वाचः=वचनानाम्, गतिः=अवभासनम, पश्चात्=अनन्तरम् इव, वस्तुनः=पदार्थस्य, गतिः=अवभानसम्, पुरस्तात्=प्रथमम्, इव, सः तादृशः, गुणः अर्थव्यक्तिः इति स्मृतः=कथित इति ।

**प्रतिकला**—जहाँ अर्थ की अभिव्यक्ति के कारण होने से पद बाद में पदार्थ पहले अवभासित जैसे लगते हैं, उस गुण को अर्थव्यक्ति कहा जाता है ।

**औज्ज्वल्यं कान्तिरित्याहुर्गुणं गुणविशारदाः ।**
**पुराणचित्रस्थानीयं तेन वन्ध्यं कवेर्वचः ।।**

**कला**—औज्ज्वल्यमित्यादि-गुणविशारदाः औज्वल्यम् गुणम् कान्तिः इति आहुः तेन वन्ध्यम् कवेः वचः पुराणचित्रस्थानीयम् इति ।

गुणविशारदाः = गुणनिपुणाः, औज्ज्वल्यम् = द्युतिमत्त्वम्, गुणम्, कान्तिः इति आहुः, तेन = औज्ज्वल्येन, वन्ध्यम् = विरहितम्, कवेः = काव्यकारस्य वचः = वचनानि–काव्यम्, पुराणचित्रस्थानीयम् = प्राचीनचित्रतुल्यम् भवति इति ।

**प्रतिकला**—गुणों के पण्डित लोग पद की रचना की उज्ज्वलता को कान्ति गुण कहते हैं। उसके विना कवि के वचन पुराने चित्र की तरह होते हैं।

**नाऽसन्तः संवेद्यत्वात् ॥ २६ ॥**

**न खल्वेते गुणा असन्तः संवेद्यत्वात् ॥ २६ ॥**

**कला**—गुणास्तु रूपादिवत्प्रत्यक्षतयाऽधिगन्तुमशक्यास्तेन तेषां कथमस्तित्वमित्याशङ्कानिरासायाह नाऽसन्त इत्यादि—असन्तः न संवेद्यत्वात् इति ।

गुणाः, असन्तः = अस्तित्वहीनाः, न = नैव, संवेद्यत्वात् = सहृदयसंवेदनस्य विषयत्वात् ।

सूत्रार्थमवतारयति न खल्विति–एते = पूर्वोक्ताः, गुणाः = ओजःप्रभृतयः, न असन्तः = नैव तुच्छाः किञ्च तेषाम् प्रत्यक्षत्वाभावेऽपि संवेद्यत्वात् = सहृदयसंवेदनविषयत्वात् इति । गुणानां प्रत्यक्षत्वाभावेऽपि संवेद्यत्वभावात् सत्ताभाव एवेत्याशयः ॥ २६ ॥

**प्रतिकला**—असत् नहीं है संवेद्य होने से ।

ये पूर्वोक्त गुण अविद्यमान नहीं है क्योंकि ये सहृदय के हृदय से संवेद्य हैं ॥ २६ ॥

**तद्विदां संवेद्यत्वेऽपि भ्रान्ताः स्युरित्याह—**

**न भ्रान्ताः निष्कम्पत्वात् ॥ २७ ॥**

**न गुणाः भ्रान्ताः । एतद्विषयायाः प्रवृत्तेर्निष्कम्पत्वात् ॥ २७ ॥**

**कला**—गुणानां सहृदयसंवेद्यत्वस्यासार्वजनीनत्वात् तादृशसंवेद्यता किं न भ्रान्तिरित्याशङ्कते तद्विदामित्यादिना–तद्विदाम् = काव्यविदाम् संवेद्यत्वे = संवेदनविषयीभूतत्वे, अपि तस्यैकान्तिकत्वात्, ते = गुणाः भ्रान्ताः = अयथार्थाः स्युः इति तदाशङ्कोन्मूलनायाह नेत्यादि-न भ्रान्ताः निष्कम्पत्वात् इति ।

गुणाः न भ्रान्ताः – नैव अयथार्थाः, निष्कम्पत्वात् = प्रवृत्तेर्निश्चलत्वात् इति।

उक्तं विशदयति नेत्यादिना–गुणाः = ओजःप्रभृतयः, न भ्रान्ताः = नैव अयथार्थाः, एतद्विषयायाः = गुणसम्बन्धितायाः, प्रवृत्तेः = चित्तवृत्तेः, निष्कम्पत्वात् = अबाधितत्वात् इति ।। २७ ।।

**प्रतिकला**—काव्यज्ञों के संवेद्य होने पर भी भ्रान्त ( भ्रमजनित ) हो सकते हैं, इस पर कहते हैं—

भ्रान्त नहीं हैं, उनकी प्रवृत्ति अबाधित होने से। ये गुण भ्रान्त नहीं हैं इस विषय की प्रवृत्ति के अबाधित होने से ।। २७ ।।

**न पाठधर्माः सर्वत्रादृष्टेः ।। २८ ।।**

इति वामनविरचितकाव्यालङ्कारसूत्रेषु गुणविवेचने तृतीयेऽधिकरणे प्रथमोऽध्यायः।

नैते गुणाः पाठधर्माः। सर्वत्राऽदृष्टेः। यदि पाठधर्माः स्युस्तर्हि विशेषानपेक्षाः सन्तः सर्वत्र दृश्येरन्। न च सर्वत्र दृश्यन्ते। विशेषापेक्षया विशेषाणां गुणत्वाद् गुणाभ्युपगम एवेति ।। २८ ।।

इति काव्यालङ्कारसूत्रवृत्तौ गुणविवेचने तृतीयेऽधिकरणे प्रथमोऽध्यायः

गुणालङ्कारविवेकः, शब्दगुणविवेकश्च ।। ३ ।। १ ।।

**कला**—गुणानां पाठधर्मत्वापहारायाह नेत्यादि—न पाठधर्माः सर्वत्र अदृष्टेः इति।

गुणाः नैव पाठधर्माः = पाठमात्रस्वभावाः, सर्वत्र = यत्रकुत्रापि, अदृष्टेः = अदर्शनात् इति।

सूत्रार्थं व्याकरोति–नैत इत्यादिना–एते = ओजःप्रभृतयः, गुणाः, न पाठधर्माः, सर्वत्र = यत्रकुत्रापि, अदृष्टेः = अदर्शनात्। यदि पाठधर्माः स्युः तर्हि = तदा, विशेषानपेक्षाः = विशेषानाकांक्षिणः, सन्तः, सर्वत्र = सर्वस्मिन्नेवावसरे, दृश्येरन् = दृष्टिपथमागच्छेयुः। न च सर्वत्र = सर्वस्मिन्नेव विन्यासे दृश्यन्ते = विलोक्यन्ते। विशेषापेक्षया = सहृदयसंविदालम्बनत्वात् विशेषावस्थाकांक्षितया, विशेषाणाम् = विशिष्टविन्यासानामेव, गुणत्वात् = गुणरूपेण स्थितत्वात्, गुणाभ्युपगमः = गुणा विशेषा इति अभ्युपगन्तव्यम् एव ।। २८ ।।

इति श्रीवामनाचार्यविरचितानां काव्यालङ्कारसूत्राणां लोकमणिविरचितायां कलाविवृत्यां गुणविवेचने तृतीयेऽधिकरणे वन्धगुणविवेचनं नाम प्रथमोऽध्यायः ।

**प्रतिकला**--सव जगह न पाए जाने से ये पाठ के धर्म नहीं है।

ये गुण पाठ के धर्म नहीं हैं। सव जगह इनके न पाए जाने से। यदि पाठ के धर्म होते तो अवस्था विशेष की अपेक्षा न करके सब जगह पाए जाने चाहिए था। न ही सब जगह पाए जाते हैं। विशेष की अपेक्षा करने के रूप में गुणों के होने से वही विशेष के गुण होने की वात माननी ही पड़ेगी।

इस प्रकार वामनविरचित 'काव्यालङ्कारसूत्र' में तृतीय अधिकरण के पहले अध्याय की प्रतिकला व्याख्या सम्पन्न हुई।



# अथ तृतीयाऽधिकरणे द्वितीयोऽध्यायः

सम्प्रत्यर्थगुणविवेचनार्थमाह—

त एवार्थगुणाः ॥ १ ॥

त एवौजःप्रभृतयोऽर्थगुणाः ॥ १ ॥

[ कला ]

अमन्दस्मितसञ्चारसन्द्योतितवचोऽमृताम् ।
ओजोमाधुर्यदीप्ताङ्गीं सिद्धार्थां भारतीं नुमः ॥१॥

शब्दगुणविवेचनानन्तरं सम्प्रति लब्धावसरत्वादर्थगुणविवेचनमारभते त एवेत्यादिना—ते एव अर्थगुणाः इति ।

ते=पूर्वोक्ता ओजःप्रभृतयः एव, अर्थगुणाः=अर्थगतगुणा इति ।

उक्तं विशदयति त इत्यादिना —ते एवओजः प्रभृतयः=शब्दगतगुणाः एव, अर्थगुणाः=अर्थगतगुणा इति ॥१॥

**प्रतिकला**—शब्दगुणों के विवेचन के बाद अर्थगुण को बताते हैं—

वे ही अर्थ के भी गुण हैं ॥१॥

वे ओजः प्रसाद आदि ही अर्थ के गुण हैं ।

शब्दार्थगुणानां वाच्यवाचकद्वारेण भेदं दर्शयति—

अर्थस्य प्रौढिरोजः ॥ २ ॥

अर्थस्याभिधेयस्य प्रौढिः प्रौढत्वमोजः ।

पदार्थे वाक्यवचनं वाक्यार्थे च पदाभिधा ।
प्रौढिर्व्याससमासौ च साभिप्रायत्वमेव च ॥ १ ॥

**कला**—यदि त एवार्थगुणास्तदा किमर्थं विधान्तरव्यसनमित्याशङ्कापवारणाय सदृशाभिधानेऽपि शब्दार्थोपश्लेषवशात्तद्भेद इति दर्शनार्थं कथयति—शब्दार्थेत्यादि-शब्दार्थगुणानाम्=अभिधानाभिधेयगतगुणानाम्, वाच्यवाचकद्वारेण=शब्दार्थोपश्लेषवशात्, भेदम्=शब्दार्थगुणभिन्नतान्, दर्शयति इति ।

तत्र क्रमप्राप्तमोजः प्रतिपादयितुमाह अर्थस्येत्यादि—अर्थस्य प्रौढिः ओज इति ।

अर्थस्य = वाच्यस्य, प्रौढिः = प्रौढभावः, ओजः = ओजोगुण इति । तमेव स्पष्टयति अर्थस्येत्यादिना—अर्थस्य = अभिधेयस्य (आशयस्य), प्रौढिः = प्रौढत्वम् ( उत्कर्षता ) 'ओजः = ओजोगुण, इति' प्रौढि पञ्चधा प्रपञ्चयति पदार्थे इत्यादिना—पदार्थे वाक्यवचनम्, वाक्यार्थे च पदाभिधा, व्याससमासौ च साभिप्रायत्वम् एव च प्रौढिः इति ।

पदार्थे = पदप्रयोजने, वाक्यवचनम् = पदावलीप्रयोगः, वाक्यार्थे = वाक्यप्रयोजने, पदाभिधा = पदेन कथनम्, पदप्रयोगः, व्याससमासौ = व्यासः (विशदरूपेण कथनम्) समासः (संक्षेपेण कथनम्), साभिप्रायत्वम् = आशयगर्भकथनम्, एव च; प्रौढिः पञ्चधेति ॥२॥

**प्रतिकला**—शब्दगत एवं अर्थगत गुणों के भेद को वाच्य एवं वाचक के द्वारा दर्शाते हैं—

पहले क्रमप्राप्त ओज गुण को बताते हैं—

अर्थ की प्रौढि ओज है ।

अर्थ—अभिधेय की प्रौढि = प्रौढ कथन, जो है वह ओज गुण है ।

प्रौढि के पाँच भेदों को बताते हैं—

पद के अर्थ के लिए वाक्य का प्रयोग, वाक्य के अर्थ में पद का प्रयोग, विशदरूप में कथन, संक्षेप में कथन और अभिप्राय छिपा हुआ कथन ।

पदार्थे वाक्यवचनं यथा 'अथ नयनसमुत्थं ज्योतिरत्रेरिव द्यौः' ॥ २ ॥ अत्र चन्द्रपदवाच्येऽर्थे नयनसमुत्थं ज्योतिरत्रेरिति वाक्यं प्रयुक्तम् । पदसमूहश्च वाक्यमभिप्रेतम् । अनया दिशाऽन्यदपि द्रष्टव्यम् ।

तद्यथा—पुरःपाण्डुच्छायं तदधु कपिलिम्ना कृतपदं
ततः पाकोत्सेकादरुणगुणसंसर्गितवपुः ।
शनैः शोषारम्भे स्थपुटनिजविष्कम्भविषमं
वने वीतामोदं बदरमरसत्वं कलयति ॥ ३ ॥

नचैवमतिप्रसङ्गः। काव्यशोभाकरत्वस्य गुणसामान्यलक्षणस्याव-स्थितत्वात्।

क्रमेणोदाहरति—पदार्थे वाक्यवचनं यथा अथेति=अथ द्यौः अत्रेः नयन-समुत्थम् ज्योतिः इव इति। अथ=अनन्तरम्, द्यौः=व्योम, अत्रेः=तदाख्यर्षेः, नयनसमुत्थम्=नेत्रोदितम्, ज्योतिः=तेजः—चन्द्रमसम् इवेति। अत्र चन्द्रपदवाच्येऽर्थे = चन्द्रमश्शब्दबोध्येऽर्थे. 'अत्रेर्नयनसमुत्थं ज्योतिः' इति वाक्यम्=पदसमूहः प्रयुक्तम्। पदसमूहः=सुप्तिङन्तसमुदायः च वाक्यम् अभिप्रेतम् = इष्टम्। अनया दिशा = अनेनैव प्रकारेण, अन्यत् अपि द्रष्टव्यम् = उदाहरणान्तरमपि ज्ञेयम्। तच्च यथा—पुर इत्यादि-बने पुरःपाण्डुच्छायम्, तदनु कपिलिम्ना कृतपदम्, ततः पाकोत्सेकात् अरुणगुणसंसर्गितवपुः, शनैः शोषारम्भे स्थपुटनिजविष्कम्भविषमम् वीतामोदम् वदरम् कलयति इति। वने = कानने, पुरः = प्रथमम्, पाण्डुच्छायम् = सितशोभम्, तदनु—तत्पश्चात्, कपिलिम्ना = कापिल्येन, कृतपदम् = विहितास्पदम्, ततः = तदनन्तरम्, पाकोत्सेकात् = पचनोद्रेकात्, अरुणगुणसंसर्गितवपुः = रक्तगुणाच्छादितशरीरम्, शनैः = मन्दमन्दम्, शोषारम्भे = शुष्कतोपक्रमे, स्थपुटनिजविष्कम्भविषमम् = निम्नोन्नतनिजाभोगोच्चावचम्, वीतामोदम् = विगतप्रमोदम्, बदरम् = बदरीफलम्, अरसत्वम् = रसहीनत्वम्, कलयति = प्राप्नोति इति। अत्र 'कपिलम्' इति वक्तव्ये' 'कपिलिम्ना कृतपदम्' इति 'शुष्के' इति वक्तव्ये 'शनैः शोषारम्भे इति पदार्थे पदसमूहरचना।

न च एवम्=पदार्थे वाक्यरचनाप्रयोगः अतिप्रसङ्गः = अतिमात्रप्रयोगः। किञ्च काव्यशोभाकरत्वस्य = शब्दार्थच्छायाधायकत्वस्य, गुणसामान्यलक्षणस्य = गुणसाधारणस्वरूपस्य, अवस्थितत्वात् = व्यवस्थापनात्—गुणसामान्यलक्षणाभावान्नातिप्रसङ्ग इत्याशयः इति।

**प्रतिकला**—पद के बदले वाक्य वचन जैसे—आकाश ने अत्रि ऋषि की आँख से निकली ज्योति को जैसे। इसमें चन्द्रमा कहने के बजाय 'अत्रि ऋषि की आँख से निकली ज्योति' ऐसे वाक्य का प्रयोग। पदों के समूह का भी वाक्य होना अभीष्ट है। इसी प्रकार से और भी समझ लेना चाहिए। जैसे—

वन में पहले सफेद फिर कपिल वर्ण का, उसके बाद पाक के उद्रेक से लाल वर्ण का शरीर वाला, धीरे-धीरे सूखने पर उन्नत एवं अवनत बने अपने आभोग से उवड़खावड़ वाला भोग को समाप्त किया हुआ बदरीफल रसहीनता को प्राप्त होता है।

यह अतिव्याप्ति नहीं होगी। काव्यशोभा के आधान के गुण साधारण के लक्षण के अवस्थित होने से। गुण सामान्य के लक्षण जो कि काव्य की शोभा का आधान हैं जहाँ नहीं घटते वहाँ इसकी व्याप्ति नहीं।

वाक्यार्थे पदाभिधानं यथा—दिव्येयं न भवति किन्तु मानुषी इति वक्तव्ये—निमिषति इत्याहेति।

**कला**—द्वितीयां प्रौढिं द्रढयति वाक्यार्थे इत्यादिना—वाक्यार्थे = वाक्यबोध्यार्थे, पदाभिधानम् = पदद्वारा कथनम् यथा—इयं दिव्या न भवति किन्तु मानुषी—इयम् = पुरःस्था, दिव्या = स्वर्गीया न भवति किन्तु मानुषी = नारी इति वक्तव्ये निमिषति = चक्षुषोः स्वाभाविकस्पन्दनं करोति इति आह। देवास्तु निर्निमेषाः अतः निमेषत्वं मनुष्यधर्मं एव। तेन निमिषतीत्यनेन तस्याः मानुषीत्वं व्यज्यते।

**प्रतिकला**—दूसरे प्रौढि को समझाते हैं। वाक्यार्थ में पद का अभिधान जैसे 'यह देवी नहीं है किन्तु मानुषी है' ऐसे कहने के बजाय 'पलकें झपकाती है' ऐसा कहना। देवता तो झपकाते नहीं हैं। झपकाना मनुष्य का धर्म है। अतः वह मानुषी है। इसका अभिप्राय होता है।

अस्य वाक्यार्थस्य व्याससमासौ। व्यासो यथा—

अयं नानाकारो भवति सुखदुःखव्यतिकरः
सुखं वा दुःखं वा न भवति भवत्येव च ततः।
पुनस्तस्मादूर्ध्वं भवति सुखदुःखं किमपि तत्
पुनस्तस्मादूर्ध्वं भवति न च दुःखं न च सुखम्॥ ४॥

**कला**—तृतीयां प्रौढिमुदाहरति अस्य वाक्यार्थस्य = पदसमुदायस्य, व्याससमासौ = व्यासः (विशदरूपेण कथनम्), समासः (संक्षेपश्च) तौ। आद्या पदार्थे वाक्यरूपा, द्वितीया वाक्यार्थे पदरूपा, तृतीया तु वाक्यार्थस्यैव विस्तररूपा, चतुर्थी वाक्येनैव संक्षिप्तरूपा इति न तु पुनरुक्तता। तत्र

व्यासः = वाक्यार्थस्य वाक्येनैव विस्तरो यथा—अयमित्यादि-अयम् सुखदुःखव्यतिकरः नानाकारः भवति, सुखम् वा दुखम् वा न भवति ततः भवति एव पुनः तस्मात् ऊर्ध्वम् तत् सुखदुःखम् किमपि भवति, पुनः तस्मात् ऊर्ध्वम् न च दुःखम् न च सुखम् भवति इति ।

अयम् = अविसंवादितया अनुभूयमानः, सुखदुःखव्यतिकरः = आनन्द-कष्टव्यसनम्, नानाकारः = विचित्ररूपः, भवतिसुखम् वा न भवति दुःखम् वा न भवति ततः सुखम् वा भवति दुःखम् वा भवति एव च, पुनः तस्मात् = तदवस्थायाः ऊर्ध्वम् = परम्, तत् सुखदुःखम् किमपि भवति, पुनः तस्मादपि उर्ध्वम् न च दुःखम् न च सुखम् भवति इति । सुखदुःखयोर्नान्यतमः नोभे, वा उभयोरन्यतमः उभे इति च । अत्र प्रथमचरणगतवाक्यस्य विस्तार एव शेषवाक्यम् । तेनात्र व्यासप्रौढिः ।

**प्रतिकला**—इसी वाक्यार्थ के व्यास एवं समास होते हैं। व्यास में वाक्यार्थ का ही वाक्यों के द्वारा विस्तार होता है और समास में वाक्यार्थ का वाक्य के द्वारा ही संक्षेप। व्यास का उदाहरण, जैसे—यह सुख एवं दुःख का अनुभव वड़ा ही विचित्र है। सुख होता है, दुःख होता है, सुख वा दुःख कुछ नहीं होता है, फिर उसके वाद कुछ-कुछ सुख दुःख दोनों होते हैं, फिर उसके वाद सुख वा दुःख दोनों नहीं। यहाँ सुख दुःख की विचित्रता विस्तृत करके वताई गई है।

**समासो यथा—**

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धश्चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥ ५ ॥

**कला**—चतुर्थीं प्रौढि विशिनष्टि—समासो यथा-समासः = वाक्यार्थस्य वाक्येनैव संक्षेपो यथा उदाहरति च ते हिमालयमित्यादिना-ते हिमालयम् आमन्त्र्य पुनः शूलिनम् प्रेक्ष्य च अस्मै सिद्धम् अर्थम् निवेद्य च तद्विसृष्टाः खम् उद्ययुरिति। ते = सप्तर्षयः, पार्वतीप्रार्थनायै हिमालयसमीपं प्रेषिताः, हिमालयम् = पार्वतीगुरुम्, आमन्त्र्य = सम्बोध्य, पुनः, शूलिनम् = शिवम्, प्रेक्ष्य = लोचनपथगोचरं कृत्वा, अस्मै = शिवाय, सिद्धम् = सफलीभूतम्, अर्थम् = पार्वतीदानवार्ताम्, निवेद्य = कथयित्वा च, तद्विसृष्टाः = तेन

(गिरीशेन) विसृष्टाः (गमनायादिष्टाः), खम् = गगनम्, उद्ययुः = ऊर्ध्वं जग्मुः इति ।

**प्रतिकला**—समास प्रौढि का उदाहरण जैसे—वे ( सप्तर्षि ) हिमालय का आमन्त्रण कर, फिर शिव से मिल कर, उनको सिद्ध बातें बता कर उनसे आज्ञा मिलने पर आकाश की ओर ऊपर गए ।

साभिप्रायत्वं यथा—

'सोऽयं सम्प्रति चन्द्रगुप्ततनयश्चन्द्रप्रकाशो युवा
जातो भूपतिराश्रयः कृतधियां दिष्टया कृतार्थश्रमः ॥ ६ ॥

आश्रयः कृतधियामित्यस्य च सुबन्धुं साचिव्योपक्षेपपरत्वात् साभिप्रायत्वम् । एतेन 'रतिविगलितबन्धे केशपाशे सुकेश्याः ॥ ७ ॥ इत्यत्र सुकेश्या इत्यस्य च साभिप्रायत्वं व्याख्यातम् ॥ २ ॥

**कला**—पञ्चमीं प्रौढिं द्रढयति साभिप्रायत्वमित्यादिना-साभिप्रायत्वम् = अन्यपदप्रयोगं विनैव तदर्थबोधनप्रयासः यथा—सोऽयमित्यादि-अयम् कृतार्थश्रमः कृतधियाम् आश्रयः युवा चन्द्रप्रकाशः सः चन्द्रगुप्ततनयः सम्प्रति, दिष्टया भूपतिः जात इति ।

अयम्, कृतार्थश्रमः = विहितसफलपरिश्रमः, कृतधियाम् = विदुषाम्, आश्रयः = आधारभूमिः, युवा = युवकः, चन्द्रप्रकाशः = इन्दुद्योतिः, चन्द्रप्रकाशाभिधानो वा, चन्द्रगुप्ततनयः = चन्द्रगुप्तपुत्रः, सम्प्रति = अधुना, दिष्टया = भाग्यवशात्, भूपतिः = महाराजः, जातः = अभूदिति ।

अत्र 'आश्रयः कृतधियाम्' इत्यस्य सुबन्धुम् = तदाख्यविद्वांसम्, साचिव्योपक्षेपपरत्वात् = सचिवपदनियुक्तेरुपक्षेपतत्परत्वेन, साभिप्रायत्वम् = गर्भिताशयत्वम्, एतेन न्यायेन 'रतिविगलितबन्धे केशपाशे सुकेश्याः—' सुकेश्याः = सुन्दरकचायाः, रतिविगलितबन्धे = संभोगनिर्मुक्तबन्धने, केशपाशे = शिरोरुहपाशे इत्यत्र सुकेश्याः इत्यस्य च साभिप्रायत्वम्, केशसौष्ठववर्णनात्मकं व्याख्यातमिति ॥२॥

**प्रतिकला**—अभिप्राय से युक्त करके कहना जैसे—बहुत परिश्रम किये हुए, विद्वानों के आश्रयदाता, ये चन्द्रगुप्त के पुत्र युवक चन्द्रप्रकाश भाग्य से अभी महाराज बन गए ।'

इसमें 'विद्वानों के आश्रयदाता' इसमें कवि सुवन्धु को साचिव्य देने के उपक्षेप होने से साभिप्रायत्व है। इसी तरह 'सुकेशी के संभोग में खुले बन्धन वाले केशपाश में'। यहाँ सुकेशी में केशसौष्ठव का आशय होने से साभिप्रायत्व है ॥२॥

**अर्थवैमल्यं प्रसादः ॥ ३ ॥**

अर्थस्य वैमल्यं प्रयोजकमात्रपरिग्रहः प्रसादः। यथा—'सवर्णा कन्यका रूपयौवनारम्भशालिनी ॥ ८ ॥ विपर्ययस्तु—'उपास्तां हस्तो मे विमलमणिकाञ्चीपदमिदम् ॥ ९ ॥ काञ्चीपदमित्यनेनैव नितम्बस्य लक्षितत्वाद् विशेषणास्याप्रयोजकत्वमिति ॥ ३ ॥

**कला**—द्वितीयमर्थगुणं प्रसादं लक्षयति-अर्थेत्यादिना—अर्थवैमल्यम् प्रसादः इति।

अर्थवैमल्यम्=विशुद्धार्थता, प्रसादः=प्रसादगुणः इति। अर्थस्य=अभिधेयस्य, वैमल्यम्=प्रयोजकमात्रपरिग्रहः विवक्षितार्थसमर्पकपदमात्रप्रयोगः, प्रसादः=प्रसादगुणः, इति।

उदाहरति यथा सवर्णेत्यादि—रूपयौवनारम्भशालिनी सवर्णा कन्यका इति। रूपयौवनारम्भशालिनी=रूपेण, यौवनारम्भेण (तारुण्यपदार्पणेन) शालते (श्लाघते) इति, सवर्णा=समानवर्णा, कन्यका=कन्या इति। अत्र सर्वेषामेव पदानां विवक्षितार्थसमर्पकत्वात् प्रसादः।

विपर्ययः=तद्व्यतिक्रमस्तु उपास्तामित्यादि—मे हस्तः इदम् विमलमणिकाञ्चीपदम् उपास्ताम् इति—मे=मम, हस्तः=करः, विमलमणिकाञ्चीपदम्=निर्मलरत्नमेखलास्थानम्—नितम्बम्, उपास्ताम्=परामृशतु इति। अत्र 'काञ्चीपदम्' इत्यनेन एव नितम्बस्य—मेखलास्थानभूतस्य लक्षितत्वात् विशेषणस्य 'विमलमणि' पदस्य अप्रयोजकत्वम्=प्रयोजनहीनता इति।

अत्र साभिप्रायत्वप्रौढेः प्रसादस्येयानेव भेदो यत्तयोः परस्परपरिहारेणैवोपस्थितिः। तच्च पूर्वोक्तोदाहरणे स्पष्टमेव ॥३॥

**प्रतिकला**—अर्थ के दूसरे गुण प्रसाद का लक्षण करते हैं—अर्थ का निर्मल होना प्रसाद है।

अर्थ का वैमल्य—विवक्षित अर्थ के प्रयोजन के लिए आवश्यक मात्र का लेना अर्थात् आकांक्षित अर्थ के अप्रयोजक शब्दों का प्रयोग न करना प्रसाद है। जैसे—रूप एवं तरुणाई के आरम्भ से शोभित समान वर्ण की कन्या। विपर्यय तो है—'मेरा हाथ विमलमणि के बने काञ्ची (मेखला) के स्थान (नितम्ब) पर रहे'। यहाँ मेखला के स्थान से ही नितम्ब का बोध होता है फिर 'विमल, मणि' इन विशेषणों का प्रयोजकत्व कुछ भी नहीं है ॥३॥

**घटना श्लेषः ॥ ४ ॥**

क्रमकौटिल्यानुल्बणत्वोपपत्तियोगो घटना। स श्लेषः।
यथा—

दृष्ट्वैकासनसङ्गते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने निमील्य विहितक्रीडानुबन्धच्छलः।
ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥ १ ॥

शूद्रकादिरचितेषु प्रबन्धेष्वस्य भूयान् प्रपञ्चो दृश्यते ॥ ४ ॥

कला—तृतीयमर्थगुणं श्लेषं लक्षयति घटनेत्यादिना—घटना श्लेष इति। घटना = सङ्घटनोपायः, श्लेषः = श्लेषगुण इति।

उक्तार्थं विशदयति क्रमेत्यादिना—क्रमेति—क्रमः (क्रियासन्ततिः, व्यापार-परम्परोत्तरविन्यासः), कौटिल्यम् (विदग्धचेष्टितो निपुणव्यवहारः) अनुल्वणत्वम् (अप्रसिद्धवर्णनाविरहः, अलोकविरुद्धत्वेन वर्णनम्), उपपत्तिः (विवक्षितार्थोपपादकयुक्तिविन्यासः) च एषां योगः (सम्मेलनम्) अथवा क्रमः कौटिल्यम् च तयोः अनुल्वणत्वेन उपपत्त्या च योगः (योजनम्), घटना, सः = घटनायुक्तः, श्लेषः = श्लेषगुणः इति।

श्लेषमुदाहरति दृष्ट्वेत्यादिना-धूर्तः प्रियतमे एकासनसङ्गते दृष्ट्वा पश्चात् उपेत्य आदरात् विहितक्रीडानुबन्धच्छलः एकस्याः नयने निमील्य ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसाम् अन्तर्हासलसत्कपोलफलकाम् अपराम् चुम्बति इति।

धूर्तः=परप्रतारणकुशलः, प्रियतमे=प्रेयस्यौ, ययोरेका प्रकटितानुरागा

अपरा च प्रच्छन्नानुरागा तत्सखी च, एकासनसङ्गते=समानपीठसंस्थिते, दृष्ट्वा=दूरतोऽवलोक्य, पश्चात्=पृष्ठतः, उपेत्य=गत्वा, आदरात्=ससम्मानम्, विहितक्रीडानुवन्धच्छलः = कृतक्रीडोपयुक्तकौतुकः सन्, एकस्याः=स्वल्पप्रणयितायाः, नयने=लोचने, निमील्य=पाणिभ्यामाच्छाद्य, ईषद्वक्रितकन्धरः = अल्पानृजूकृतग्रीवः, सपुलकः=जातरोमाञ्चः, सन्, प्रेमोल्लसन्मानसाम्=प्रणयोत्फुल्लचित्ताम्, अन्तर्हासलसत्कपोलफलकाम =अन्तः ( आभ्यन्तरे ) यः हासस्तेन लसन्तौ ( देदीप्यमानौ ) कपोलौ ( गण्डस्थलौ ) फलकौ इव, यस्यास्ताम् अपराम् = वहुप्रणयिताम् चुम्वति=निक्षति इति । अत्र क्रमो दर्शनादिः, कौटिल्यम् उभयसमर्थनरूपम्, उपपत्तिः ईषद्वक्रितकन्धरः, इति । तेनाऽत्र श्लेषः ।

उदाहरणान्तरं सङ्केतयति–शूद्रकेत्यादि–शूद्रकादिरचितेषु = शूद्रकप्रभृतिसिद्धहस्तकविनिवद्धेषु, प्रवन्धेषु, अस्य=श्लेषस्य, भूयान्–विस्तृतः, प्रपञ्चः=प्रबन्धः, दृश्यते=लभ्यत इति ॥४॥

**प्रतिकला**—तीसरे अर्थगुण श्लेष का लक्षण करते हैं—

घटना ( पदों का सङ्घटन ) श्लेष है ।

क्रम ( क्रिया की परम्परा को उत्तर के रूप में वर्णन ) कौटिल्य ( चतुर के द्वारा किया गया चतुराई से युक्त व्यवहार ) अनुल्वणत्व ( अप्रसिद्ध वर्णन का न होना, लोक के विरुद्ध न होने के ढङ्ग का वर्णन ) और उपपत्ति (विवक्षित अर्थ का उपपादक हो सकने के ढङ्ग से विन्यास का सम्मेलन) घटना है और वही श्लेष है । जैसे—

धूर्त प्रेमी दोनों प्रियतमाओं को एक ही आसन में वैठे हुए दूर से देखकर पीछे से आकर खेल के अनुवन्ध का वहाना करते हुए एक प्रियतमा की आँखें अपने हाथों से ढक कर, गर्दन को थोड़ा सा झुका कर रोमाञ्चित होता हुआ, प्रेम के उल्लास से प्रफुल्ल मन वाली एवं भीतर ही भीतर हँसने से रमणीय कपोलों वाली दूसरी प्रियतमा को चूमता है ।

इस प्रकार के श्लेष शूद्रक आदि कवि की रचनाओं में काफी मिलते है ॥४॥

**अवैषम्यं समता ॥ ५ ॥**

अवैषम्यं प्रक्रमाभेदः समता । क्वचित् क्रमोऽपि भिद्यते । यथा—

च्युतसुमनसः कुन्दाः पुष्पोद्गमेष्वलसा द्रुमा
मलयमरुतः सर्पन्तीमे वियुक्तधृतिच्छिदः ।
अथ च सवितुः शीतोल्लासं लुनन्ति मरीचयो
न च जरठतामालम्बन्ते क्लमोदयदायिनीम् ॥ ११ ॥

ऋतुसन्धिप्रतिपादनपरेऽत्र द्वितीये पादे क्रमभेदो मलयमरुतामसाधारणत्वात् । एवं द्वितीयः पादः पठितव्यः—'मनसि च गिरं बध्नन्तीमे किरन्ति न कोकिलाः' इति ॥ ५ ॥

कला—चतुर्थमर्थगुणं समतां लक्षयति अवैषम्यमित्यादिना-अवैषम्यम् समता इति ।

अवैषम्यम्=क्रमभेदभावः, समता=समतागुण इति । तमेव व्यनक्ति अवैषम्यमित्यादिना-अवैषम्यम्–प्रक्रमाभेदः (प्रक्रमस्य = आरब्धमार्गस्य, अभेदः उपक्रमोपसंहारयोरेकविधबन्धात्मकता) समता=समतागुणः इति ।

प्रत्युदाहरणं प्रस्तौति क्वचिदित्यादिना—क्वचित्=कुत्रचित् स्थाने तु क्रमः=एकविधगुम्फनम्, अपि, भिद्यते=भिन्नतां याति । यथा च्युतेत्यादि-कुन्दाः च्युतसुमनसः, द्रुमाः पुष्पोद्गमेषु अलसाः इमे मलयमरुतः वियुक्तधृतिच्छिदः सर्पन्ति अथ च सवितुः मरीचयः शीतोल्लासम् लुनन्ति न च क्लमोदयदायिनीम् जरठताम् आलम्बन्ते इति ।

कुन्दाः=कुन्दपादपाः, च्युतसुमनसः=पतितपुष्पाः, द्रुमाः=इतरे वृक्षाः अपि पुष्पोद्गमेषु=कुसुमविकासेषु, अलसाः=त्यक्तोद्यमाः, इमे=प्रसिद्धाः, वियुक्तधृतिच्छिदः=वियोगिधैर्यकर्तनाः, मलयमरुतः=मलयवाताः, सर्पन्ति=वान्ति, अथ च, सवितुः=सूर्यस्य, मरीचयः=किरणाः, शीतोल्लासम्=तुषारोत्कर्षम्, लुनन्ति=हरन्ति, न च=नैव च, क्लमोदयदायिनीम्=घर्मविन्दुनिस्सारिकाम्, जरठताम्=परुषताम्, उष्णताम्, आलम्बन्ते=संश्रयन्ते इति ।

ऋतुसन्धिप्रतिपादनपरे=ऋत्वोः (शिशिरवसन्तयोः) सन्धिः (सङ्क्र-

मणकालः ) तस्य प्रतिपादनपरे ( वर्णनपरायणे ) अत्र = अस्मिन्पद्ये द्वितीये पादे ( चरणे ) क्रमभेदः = परिपाटीभङ्गः मलयमरुताम् = मलयानिलानाम्, असाधारणत्वात् = वसन्तैकधर्मतया शिशिरेऽसामान्यत्वात् ।

प्रक्रमाभेदोदाहरणाय पाठान्तरं निर्दिशति—एवम् = वक्ष्यमाणप्रकारेण, द्वितीयः पादः ( चरणः ) पठितव्यः, प्रक्रमाभेदायेति शेषः । यथा—इमे कोकिला मनसि गिरम् बध्नन्ति च किन्तु न किरन्ति इति । इमे = प्रसिद्धाः, कोकिलाः = परभृताः, मनसि = मानसे, गिरम् = वचनम्, बध्नन्ति = प्रकल्पयन्ति, किन्तु न किरन्ति = जल्पन्ति वसन्तानागमनात् इति । अत्र तु प्रक्रमाभेदः स्फुट एव ॥५॥

**प्रतिकला**—चौथे अर्थगुण समता को बताते हैं—

वर्णन की विषमता का न होना ( समान वर्णन का होना ) समता गुण है ।

अवैषम्य जो है प्रक्रम का अभेद अर्थात् आदि एवं उपसंहार में उसी विषय के वर्णन का होना समता है । कहीं क्रम भी टूट जाता है । जैसे—

कुन्द से फूल गिर गए हैं, दूसरे वृक्ष भी फूलों के विकास में आलसी हैं, वियोगी के धैर्य को टूटानेवाला यह मलयानिल भी वह रहा है और सूर्य को किरणें भी शीत के उल्लास को हटाते हैं लेकिन उनमें भी पसीना निकाल पाने की कठोरता नहीं आई है ।

शिशिर एवं वसन्त के सन्धिकाल के वर्णन करने में लगे इस पद्य में दूसरी पङ्क्ति में मलयानिल का वर्णन असाधारण होने से [ क्योंकि मलयानिल तो कामोत्पादक होते हैं और वसन्त में ही वहते हैं ] क्रम का भङ्ग हुआ । दूसरे चरण को इस प्रकार पढना चाहिए—ये कोकिल मन में वचन तो गूँथ लेते हैं लेकिन बाहर निकालते नही ॥५॥

**सुगमत्वं वाऽवैषम्यमिति ॥ ६ ॥**

सुखेन गम्यते ज्ञायत इत्यर्थः । यथा—'अस्त्युत्तरस्यां दिशि देवतात्मा' इत्यादि । यथा वा—

का स्विदवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् ॥ १२ ॥

प्रत्युदाहरणं सुलभम् ॥ ६ ॥

**कला**—पक्षान्तरं निर्दिशति सुगमत्वमित्यादिना—वा=अथवा, सुगमत्वम्=सुखबोध्यत्वम्, अवैषम्यम इति।

तं स्पष्टयति—सुखेनेत्यादिना–सुखेन=अक्लेशेनैव, गम्यते=ज्ञायते इत्यर्थः।

तमुदाहरति अस्तीत्यादिना—पद्यं व्याख्यातपूर्वमेव।

यथा वा कास्विदित्यादि—अवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या तपोधनानाम् मध्ये पाण्डुपत्राणाम् मध्ये किसलयम् इव कास्वित् इति।

अवगुण्ठनवती=आवरणवस्त्राच्छादिता, नातिपरिस्फुटशरीरलावण्या=नात्यन्तस्पष्टवपुःसौन्दर्या, तपोधनानाम्=तपस्विनाम्, मध्ये=अन्तर्वर्तिनी, पाण्डुपत्राणाम्=श्वेतपर्णानाम्, मध्ये, किसलयम्=पल्लवम्, इव, एषा, कास्वित्=कतमा संभवति इति।

प्रत्युदाहरणम् = विपर्ययदृष्टान्तः, सुलभम् = अनायासप्राप्यम् तच्च अपक्रमत्वं क्लिष्टत्वञ्च। तदुभयमप्युदाहृतपूर्वमेव ॥६॥

**प्रतिकला**—पक्षान्तर से अवैषम्य को बताते हैं—

अथवा सरलता भी अवैषम्य है।

'सुख से जाना जाता है' ऐसा इसका अर्थ है।

जैसे—'उत्तर दिशा में··· ···'।

अथवा यह, जैसे—

तपस्वियों के बीच में सफेद पत्तों के बीच में पल्लव की तरह घुंघट काढे हुए शरीर का लावण्य स्पष्ट रूप से न झलकाए हुए यह कौन होगी।

प्रत्युदाहरण सुलभ ही है—अक्रम एवं क्लिष्टत्व इसके विपर्यय हैं। उनके उदाहरण दिए जा चुके हैं ॥६॥

अर्थदृष्टिः समाधिः ॥ ७ ॥

अर्थस्य दर्शनं दृष्टिः। समाधिकारणत्वात् समाधिः। अवहितं हि चित्तमर्थान् पश्यतीत्युक्तं पुरस्तात् ॥ ७ ॥

**कला**—पञ्चममर्थगुणं समाधिं लक्षयति अर्थेत्यादिना-अर्थदृष्टिः समाधिः इति।

अर्थदृष्टिः = अर्थस्य ( अभिप्रायस्य ) दृष्टिः=दर्शनम्, समाधिः= समाधिगुण इति ।

सूत्रार्थं स्पष्टयति अर्थस्येत्यादिना—अर्थस्य=विवक्षिताभिप्रायस्य, दर्शनम्=अवबोधनम्, दृष्टिः । समाधिकारणत्वात्=समाधिः ( अवधानम्) कारणम् ( हेतुः ) अस्य तस्य भावः तस्मात्, समाधिः—कार्यकारणयोरभेद उपचारेणोक्तः । अवहितम् = वाह्यार्थनिवृत्तम्, चित्तम्=चेतः अर्थान्= अभिनवपदार्थान्, पश्यति=अप्रतिबन्धमुल्लिखति इति, पुरस्तात्=प्रथमम्, 'चित्तैकाग्र्यमवधानम्' इति १·३·१७ सूत्रे, उक्तम्=वर्णितमिति ॥७॥

**प्रतिकला**—पाँचवें अर्थगुण समाधि को कहते हैं ।

अर्थ की दृष्टि समाधि है ।

अर्थ का दर्शन जो है वही अर्थदृष्टि है । समाधि ही उसके कारण होने से समाधि हैं । कार्य एवं कारण का अभेद उपचार से माना गया है । 'दूसरी वृत्तियों से शून्य चित्त पदार्थ को देखता है' ऐसा पहले ही कहा जा चुका है ॥७॥

**अर्थो द्विविधोऽयोनिरन्यच्छायायोनिर्वा ॥ ८ ॥**

यस्यार्थस्य दर्शनं समाधिः सोऽर्थो द्विविधः—अयोनिरन्यच्छाया-योनिर्वेति । अयोनिरकारणः । अवधानमात्रकारण इत्यर्थः । अन्यस्य काव्यस्य छायाऽन्यच्छाया तद्योनिर्वा । तद्यथा—

आश्वैपेहि मम सीधुभाजनाद् यावदग्रदशनैर्न दश्यसे ।
चन्द्र मद्दशनमण्डलाङ्कितो खं न यास्यसि हि रोहणीभयात् ॥१३॥

मा भैः शशाङ्क मम सीधुनि नास्ति राहु-
खे रोहिणी वसति कातर किं बिभेषि ।
प्रायो विदग्धवनितानवसङ्गमेषु
पुंसां मनः प्रचलतीति किमत्र चित्रम् ॥ १४ ॥

पूर्वस्य श्लोकस्यार्थोऽयोनिः । द्वितीयस्य च छायायोनिरिति ॥८॥

**कला**—अर्थं विवेचयति अर्थ इत्यादिना—अर्थः द्विविधः अयोनिः अन्य-च्छायायोनिः वा इति ।

अर्थः=पदार्थः, द्विविधिः=द्विप्रकारकः, अयोनिः=अजन्मा, स्वबुद्धि-

-प्रादुर्भावितः, वा, अन्यच्छायायोनिः = अपरकविव्यवहृत इति । सूत्रार्थं स्पष्टयति -यस्येत्यादिना—-यस्य अर्थस्य = पदार्थस्य, दर्शनम् = अवहितत्वम्, समाधिः, सः = तादृशः, अर्थः, द्विविधः = द्विप्रकारकः—अयोनिः अन्यच्छायायोनिः वा इति । अयोनिः—अकारणः ( न विद्यते योनिः कारणमस्येति —पूर्वं कविशीलितपरम्परामन्तरेण—स्वबुद्धिविभवमात्रप्रादुर्भावेनोपमेयभावादिरूपः । अवधानमात्रकारणः = चेतसो वाह्यवृत्तिनिवर्तनमात्रहेतुः, इत्यर्थः = इत्याशयः । अन्यस्य ( स्वभिन्नस्य ) काव्यस्य ( कविकृतेः ) छाया ( प्रतिविम्बम् ) योनिः—( योनिः वा एव कारणम् ) यस्य स इति ।

उभौ द्रढयति तदित्यादिना—तौ = अयोन्यच्छायायोनिरूपावर्थौ, यथा । अयोन्यर्थमुदाहरति आश्वपैहीत्यादिना—हे चन्द्र, यावत् अग्रदशनैः न दश्यसे तावत् मम सीधुभाजनात् आशु अपैहि मद्दशनमण्डलाङ्कितः रोहिणीभयात् खम् न यास्यसि हि इति ।

हे चन्द्र ! इन्दो ! यावत् अग्रदशनैः = अग्रभागदन्तैः, न दश्यसे = छिद्यसे, तावत्, मम = मे, सीधुभाजनात् = पानपात्रात्, आशु = शीघ्रम्, अपैहि = दूरं याहि, किञ्च मद्दशनमण्डलाङ्कितः = मद्दन्तपरिधिचिह्नितः, रोहिणीभयात् = रोहिणीत्रासात्,-खम् = आकाशम्, न यास्यसि = गच्छसि इति ।

अन्यच्छायायोनिमुदाहरति मा भैरित्यादिना—रे शशाङ्क ! मा भैः मम सीधुनि राहुः नास्ति रोहिणी खे वसति हे कातर किम् विभेषि, विदग्धवनितानवसङ्गमेषु पुंसाम् मनः प्रायः प्रचलति इति अत्र किम् चित्रम् इति ।

हे शशाङ्क ! हे शशचिह्नित ! चन्द्र ! मा भैः = भयं मा कुरु, किञ्च मम सीधुनि = पानपात्रे, राहुः = त्वद्ग्रहणनिमित्तग्रह : नास्ति, रोहिणी = त्वत्प्रिया, च खे = गगने, वसति = तिष्ठति—अत्र निकटे नास्ति, तेन, किम् = किमर्थम् विभेषि = त्रासमापद्यसे, विदग्धवनितानवसङ्गमेषु = श्रेष्ठरमणीनूतनसमागमेषु, पुंसाम् = रमणानाम्, मनः = चित्तम्, प्रायः = बहुधा, प्रचलति = आतुरं भवति इति अत्र = अस्मिन्विषये, किम् चित्रम् = अद्भुतम् = अपितु नैवाद्भुतमेव ।

लक्ष्ये लक्षणं घटयति पूर्वस्येत्यादिना—-पूर्वस्य = प्रथमस्य, श्लोकस्य = आश्वपैहीत्यादिपद्यस्य, अयोनिः = अपूर्वकारण : स्वप्रकल्पितः, अर्थः = पदार्थः,

द्वितीयस्य=मा भैरित्यादेरपरपद्यस्य, अर्थस्तु छायायोनिः=अन्यकविकृति-प्रतिविम्वकारणः इति ॥८॥

**प्रतिकला**—वह अर्थ दो प्रकार का होता है अयोनि और अन्यच्छाया-योनि।

जिस अर्थ का दर्शन समाधि हैं वह अर्थ दो प्रकार का होता है—अयोनि और अन्यच्छायायोनि। अयोनि वह हैं जिसकी उत्पत्ति का कोई पूर्व कारण नहीं होता अर्थात् कवि की कल्पना से ही पदार्थ प्रसृत होता है। मात्र कवि के चित्त की एकाग्रता ही उसका कारण होता है। दूसरे काव्य की छाया ( प्रतिविम्व ) अन्यच्छाया कही जाती है वही उत्पत्ति है जिसका, ऐसा। वे जैसे—

हे चन्द्रमा! जब तक कि मेरे अगले दाँतों से काटे न जाओगे तव तक में ही मेरे पानपात्र से भाग जाओ, फिर मेरे दाँतों के मण्डल से चिह्नित होने पर रोहिणी के भय से आकाश को नहीं जा पाओगे ॥ १३ ॥

हे चन्द्रमा, तुम मत डरो, मेरे मदिरापात्र में राहु नहीं वैठा है और रोहिणी भी दूर आकाश में है,। हे डरपोक! तो क्यों डरते हैं? श्रेष्ठ रमणी के साथ के पहले समागम में पुरुषों का मन प्रायः चञ्चल होता है तो इसमें क्या आश्चर्य हुआ?

पहले श्लोक का अर्थ अयोनि है और दूसरे का अर्थ छायायोनि ॥८॥

**अर्थो व्यक्तः सूक्ष्मश्च ॥ ९ ॥**

यस्यार्थस्य दर्शनं समाधिरिति, स द्वेधा व्यक्तः सूक्ष्मश्च। व्यक्तः स्फुट उदाहृत एव ॥ ९ ॥

**कला**—अर्थभेदान्दशयति अर्थ इत्यादिना—अर्थः व्यक्तः सूक्ष्मः च इति। अर्थः=पदार्थः, व्यक्तः=प्रकटः, सूक्ष्मः=अप्रकटः च इति द्विविधो भवति।

तमेव स्पष्टयति यस्येत्यादिना–यस्य अर्थस्य=पदार्थस्य, दर्शनम्=दृष्टिः समाधिः, स=अर्थः द्वेधा=द्विविधः व्यक्तः=प्रकटः, सूक्ष्मः = अव्यक्तश्च। तयोर्मध्ये व्यक्तः स्पष्ट एव, उदाहृतः दृष्टान्तद्रढितश्च।

**प्रतिकला**—वह अर्थ दो प्रकार का होता है व्यक्त एवं सूक्ष्म। जिस

अर्थ का दर्शन समाधि है वह अर्थ दो प्रकार का है व्यक्त एवं सूक्ष्म। व्यक्त स्पष्ट ही है और उसे दृष्टान्त द्वारा समझाया जा चुका है ॥९॥

सूक्ष्मो भाव्यो वासनीयश्च ॥ १० ॥

सूक्ष्मो द्वेधा भवति—भाव्यो वासनीयश्च। शीघ्रनिरूपणागम्यो भाव्य: एकाग्रताप्रकर्षगम्यो वासनीय इति।

भाव्यो यथा—

अन्योन्यसंवलितमांसलदन्तकान्ति
सोल्लासमाविरलसंवलितार्धतारम्।
लीलागृहे प्रतिकलं किलिकिञ्चितेषु
व्यावर्तमाननयनं मिथुनं चकास्ति ॥ १५ ॥

वासनीयो यथा—

अवहित्थवलितजघनं विवर्तिताभिमुखकुचतटं स्थित्वा।
अवलोकितोऽहमनया दक्षिणकरकलितहारलतम् ॥ १६ ॥

कला—सूक्ष्मार्थं निरूपयति सूक्ष्म इत्यादिना-सूक्ष्म: भाव्य: वासनीय: च इति—

सूक्ष्म:=सूक्ष्मार्थ:, भाव्य: = भावकविधानविमर्शयोग्य:, वासनीय:, सूक्ष्म:=एकाग्रतोत्कर्षगम्यश्च इति द्वेधा भवति इति।

सूत्रार्थं स्पष्टयति सूक्ष्म इत्यादिना-सूक्ष्म:=सूक्ष्मार्थ:, द्वेधा=द्विप्रकारात्मक:, भवति, भाव्य: वासनीय: च। भाव्य:=शीघ्रनिरूपणागम्य: ( अवधानमात्रविमर्शयोग्य: ) वासनीय:=एकाग्रताप्रकर्षगम्य: ( संस्कारावधानोत्कर्षगम्य: ) इति।

क्रमेणोदाहरति। तत्र भाव्यो यथा अन्योन्येत्यादि-अन्योन्यसंवलितमांसलदन्तकान्ति, सोल्लासम् आविरलसम् वलितार्धतारम्, लीलागृहे प्रतिकलम् किलकिञ्चितेषु व्यावर्तमाननयनम् मिथुनम् चकास्ति इति।

अन्योन्यम् ( परस्परम् ) संवलिता ( मिलिता ) मांसलानाम् ( स्वस्थानाम् ) दन्तानाम् ( दशनानाम् ) कान्ति: ( द्युति: ) ययोस्तत्, सोल्लासम् =साह्लादम्, आविरलसम् ( प्रकटितालस्यम् ), यथा स्यात्तथा, वलितार्धतारम्=उन्मीलितार्धकनीनिकम् लीलागृहे=केलिभवने, प्रतिकलम्=

प्रतिक्षणम्, किलकिञ्चितेषु = स्वभावजभावाभिनयेषु, व्यावर्तमाननयनम् =संघूर्णितलोचनम्, मिथुनम् = विलासियुगलम्, चकास्ति = शोभते इति।

अत्र शृङ्गाररसो भाव्यः। यथोक्तम्—विभावैरनुभावैश्च सात्त्विकैर्व्य-भिचारिभिः। आनीयमानः स्वादुत्वं स्थायिभावो रसः स्मृतः, 'भावितः स्वदते स्थायी रसः स परिकीर्तितः इत्यपि' तत्र मिथुनेनालम्बनेन लीला-गृहेणोद्दीपनेन विभावितः, अधरस्वादक्लमस्मिताकम्पनव्यावर्तनादिभि-रनुभावितः, उल्लासहर्षासूयाक्रोधभयादिभिः सञ्चारितः तैः स्वादुत्वमानीतो रतिस्थायिभावः सम्भोगशृङ्गाररस इति।

वासनीयो यथा अवहित्थेत्यादि—अनया अहम् अवहित्थवलितजघनम्, विवर्तिताभिमुखकुचतटम् स्थित्वा दक्षिणकरकलितहारलतम् अवलोकित इति।

अनया = सुन्दर्या, अहम्, अवहित्थेति = अवहित्थम् ( आकारगोपनम् ) यथा भवति तथा वलिते (संयोजिते) जघने ( श्रोण्यौ ) यस्मिन् कर्मणि तत्, विवर्तितेति = सम्मुखीकृतस्तनतटम्, स्थित्वा, दक्षिणकरकलितहारलतम् = सव्यहस्तसञ्चालितमालम्, अवलोकितः = दृष्ट इति। अत्र त्वमपि हारवन्मम हृदयस्थो भव, अहं त्वयि रतेत्याशयः सहृदयसंवेद्य एव विप्रलम्भाख्यः शृङ्गारो रसोऽत्र वासितः ॥१०॥

**प्रतिकला**—सूक्ष्म अर्थ भी दो प्रकार का होता है, भाव्य और वासनीय।

सूक्ष्म दो प्रकार का होता है भाव्य एवं वासनीय। जल्दी ही जिसका अर्थ समझ में आता है वह भाव्य है, अवधानता के उत्कर्ष सी ही जाना जाने वाला वासनीय है। भाव्य जैसे—

परस्पर में जुड़े हुए स्वस्थ दाँतों की कान्ति वाला, उल्लास से भरपूर, अलसाते हुए आधे खुले नेत्रों वाला, लीला भवन में हरेक पल किल-किञ्चितों में आँखों को एक दूसरे में घूमाता हुआ रमणयुगल ( विलासियों का जोडा ) शोभित है।

वासनीय जैसे—

जांघों को परस्पर में सटाते हुए, स्तनों को सम्मुख करके बैठ कर दायें हाथ से माला को हिलाते हुए उस सुन्दरी ने मुझे देखा ॥१०॥

**उक्तिवैचित्र्यं माधुर्यम् ॥ ११ ॥**

उक्तेर्वैचित्र्यं यत्तन्माधुर्यमिति । यथा—

रसवदमृतं, कः सन्देहो मधून्यपि नान्यथा ।
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम् ।
सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो
वदतु यदिहान्यत् स्वादु स्यात् प्रियादशनच्छदात् ॥ १७ ॥

**कला**—षष्ठमर्थगुणं माधुर्यं लक्षयति उक्तीत्यादिना—उक्तिवैचित्र्यम् माधुर्यम् इति ।

उक्तिवैचित्र्यम्=वर्णनाद्भूतत्वम्, माधुर्यम्=माधुर्यगुण, इति । सूत्रार्थं स्पष्टयति उक्तेरित्यादिना—उक्तेः=वर्ण्यमानस्यार्थस्य, वैचित्र्यम्=भङ्ग्यन्तरेण प्रतिपादनम् यत्, तत् माधुर्यम्=माधुर्यगुण इति ।

उदाहरति रसवदित्यादिना—अमृतम्, रसवत् कः सन्देहः, मधूनि अपि न अन्यथा, चूतस्य प्रसन्नरसम् फलम् अपि अधिकम् मधुरम्, पुनः रसान्तरवित् जनः मध्यस्थः सन् शकृत् अपि वदतु यत् इह प्रियादशनच्छदात् अन्यत् स्वादु स्यात् इति ।

अमृतम्=पीयूषम्, रसवत्=रसयुक्तम् भवति, कः सन्देहः=नास्त्येव संशयः, मधूनि=क्षौद्राणि अपि, न अन्यथा=अपितु रसवन्ति एव, चूतस्य=आम्रस्य, प्रसन्नरसम्=उल्लसद्रसम्, फलम् अपि अधिकम्=अत्यन्तमेव, मधुरम्=स्वादु, पुनः रसान्तरविद्=रसमर्मज्ञः, जनः, मध्यस्थः=निष्पक्षपातः सन्, सकृदपि=भूयोऽपि, वदतु=गदतु, यत्, इह=संसारे, प्रियादशनच्छदात् =प्रेयस्यधरात्, अन्यत् = अपरम्, स्वादु=मधुरम्, स्यादिति—तादृशवस्त्वन्तरासम्भव इत्याशयः। अत्र दशनच्छदं नानाविधोपमानातिशायि इति वक्तव्ये रसवदित्यादिभङ्ग्यन्तरेण प्रतिपादनान्माधुर्यगुण इति ॥११॥

**प्रतिकला**—छठें माधुर्य गुण का लक्षण करते हैं—

उक्ति की विचित्रता माधुर्य है ।

उक्ति की जो विचित्रता ( घुमा फिरा कर कहना ) है वही माधुर्य है ।

जैसे—

अमृत मीठा होता है, उसमें कोई शक नहीं, मधु भी मीठा होता, है, आम का रसयुक्त फल भी अत्यन्त मीठा होता है, फिर भी रस का मर्म जानने वाला व्यक्ति निष्पक्ष होकर कहे कि प्रेयसी के अधर के अलावा दूसरी कौन सी वस्तु मीठी होती है अर्थात् कोई भी नहीं ॥११॥

**अपारुष्यं सौकुमार्यम् ॥ १२ ॥**

परुषेऽर्थे अपारुष्यं सौकुमार्यमिति । यथा मृतं, यशःशेषमित्याहुः । एकाकिनं देवताद्वितीयमिति । गच्छेति साधयेति च ॥ १२ ॥

**कला**—सप्तममर्थगुणं सौकुमार्यं लक्षयति अपारुष्यमित्यादिना-अपारुष्यम् सौकुमार्यम् इति ।

अपारुष्यम्=अकठोरत्वम्, सौकुमार्यम्=सौकुमार्यगुण इति ।

सूत्रार्थं विविङ्क्ते परुष इत्यादिना—परुषे=अमङ्गलबोधके आतङ्कसूचके वा, अर्थे=पदार्थे, अपारुष्यम्=अकठोरत्वम्, सौकुमार्यम् इति ।

उदाहरति च यथा 'मृतम्' यशःशेषम् इति आहुः, 'एकाकिनम्' देवताद्वितीयम्, गच्छ इति साधय इति । स मृतः इति वक्तुम् स यशःशेषतां गत इति कथनम्, एकाकी निर्गतो गृहात् 'इति वक्तुम् देवताद्वितीयो गृहान्निर्गत इति कथनम्', तद्गच्छ त्वरितं भवान्' इति वक्तुम् साधय त्वरितं भवान् इति कथनञ्च ।

अश्लीलत्वमस्य विपर्ययः परुषता च ॥१२॥

**प्रतिकला**—कठोरता का न होना सौकुमार्य है ।

रुखे अर्थ में रुखेपन का न होना सौकुमार्य है । जैसे 'मरे हुए' को कीर्तिशेष' 'अकेले' को देवताद्वितीय 'जाओ' को 'साध लो' आदि । इसका विपर्यय अश्लील वा कठोरवचन है ॥१२॥

**अग्राम्यत्वमुदारता ॥ १३ ॥**

ग्राम्यत्वप्रसङ्गेऽग्राम्यत्वमुदारता । यथा—

त्वमेवंसौन्दर्या स च रुचिरतायाः परिचितः
कलानां सीमानं परमिह युवामेव भजथः ।
अयि द्वन्द्वं दिष्टया तदिति सुभगे संवदति वा-
मतः शेषं चेत् स्याज्जितमिह तदानीं गुणितया ॥ १८ ॥

विपर्ययस्तु —

स्वपिति यावदयं निकटे जनः स्वपिमि तावदहं किमपैति ते ।
इति निगद्य शनैरनुमेखलं मम करं स्वकरेण रुरोध सा ॥ १९ ॥

कला—अष्टममर्थगुणमुदारतां लक्षयति अग्राम्यत्वमित्यादिना—अग्राम्यत्वम्, उदारता इति ।

अग्राम्यत्वम् = अश्लीलरहितत्वम्, उदारता = उदारतागुणः इति । सूत्रार्थं स्पष्टयति ग्राम्यत्वेत्यादिना—ग्राम्यत्वप्रसङ्गे = अश्लीलविषयेऽपि, अग्राम्यत्वम् = श्लीलत्वम्, उदारता इति । उदारतामुदाहरति—त्वमेवेत्यादि—अयि ! सुभगे ! त्वम् एवंसौन्दर्या, स च रुचिरतायाः परिचितः, इह युवाम् एव कलानाम् परम् सीमानम् भजथः दिष्ट्या वाम् द्वन्द्वम् संवदति इति तत् अतः शेषम् स्यात् चेत् तदानीम् गुणितया इह जितम् इति ।

अयि सुभगे ! = हे भाग्यवति कन्यके ! त्वम् = भवती, एवं सौन्दर्या = एवम् ( वर्णनातीतम् ) सौन्दर्यम् ( लावण्यम् ) यस्याः सा, अतिसुन्दरी, सः = नायकः च रुचिरतायाः = कमनीयतायाः, परिचितः = संस्तुतः, आस्पदम्, इह = लोके युवाम् = त्वम् च स च उभौ, एव कलानाम् = सौन्दर्यकलानाम्, परम् = परमम्, सीमानम् = अवधिम्, भजथः = प्राप्नुथः, दिष्ट्या = भाग्यवशात्, वाम् = युवयोः द्वन्द्वम् = युगलम्, संवदति = सदृशं भवति इति, तत्, अतः शेषम् = अवशिष्टं पाणिग्रहणादिकं कर्म स्यात्, चेत् तदानीम्, इह, गुणितया = गुणवत्त्वेन, जितम् = सर्वोत्कृष्टत्वेन स्थितम् — युवयोर्युगलं युगातिशायि भवतीति । अत्र कामयमानं कान्तं भजस्वेति वक्तव्ये तादृशौचित्येन तदेवार्थप्रतिपादनं सौकुमार्यम् ।

विपर्ययः = व्यतिक्रमस्तु यथा—स्वपितीत्यादि—अयम् निकटे जनः यावत् स्वपिति तावत् अहम् स्वपिमि ते किम् अपैति, इति शनैः निगद्य मम अनुमेखलम् करम् सा स्वकरेण रुरोध इति ।

अयम् = परिचरसञ्चारी, जनः = पुरुषः, निकटे, यावत् स्वपिति = निद्राति, तावत् अहम् स्वपिमि = शयनं करोमि, ते किम् अपैति = का हानिर्भवति, इति शनैः = उपांशु, निगद्य = कथयित्वा, मम = मे, अनुमेखलम् =

मेखलासमीपे प्रसारितम्, करम्=हस्तम्, सा स्वकरेण=निजहस्तेन, रुरोध निरुद्धवती इति । अत्र ग्राम्यत्वं स्पष्टम् ॥१३॥

**प्रतिकला**—आठवें अर्थगुण उदारता का लक्षण करते हैं —

अश्लीलत्व का न होना उदारता है । अश्लील विषय में भी अश्लीलता का न होना उदारता है । जैसे—

हे सुन्दरी ! तुम वर्णन से बाहर की सुन्दरता से युक्त हो और वह भी कमनीयता का आश्रय है, तुम दोनों ही कला की ऊपरी सीमा को प्राप्त हुए हो, भाग्य से तुम दोनों की जोड़ी भी खूब बनती है, तो इससे आगे के काम ( पाणिग्रहण आदि ) हो जाय तो गुणवत्ता का विजय ही होगा। यहाँ तुम इससे शादी करो, कहने के बजाय इस तरह से उचित ढङ्ग से कहा गया है, अतः उदारता है ।

इसका प्रत्युदाहरण है—

जब तक यह आदमी नींद में है तब तक के लिए मैं यहीं सोती हूं, इससे तुम्हें क्या आपत्ति हैं, इस तरह धीरे से कहकर उसने मेखला के पास पहुँचे मेरे हाथ को अपने हाथ से रोक लिया । यहां अश्लीलता स्पष्ट हैं ॥१३॥

**वस्तुस्वभावस्फुटत्वमर्थव्यक्तिः ॥ १४ ॥**

वस्तूनां भावानां स्वभावस्य स्फुटत्वं यदसावर्थव्यक्तिः । यथा—

पृष्ठेषु शङ्खशकलच्छविषुच्छदानां
राजीभिरङ्कितमलक्तकलोहिनीभिः ।
गोरोचनाहरितबभ्रु बहिःपलाश-
मामोदते कुमुदमम्भसि पल्वलस्य ॥ २० ॥

यथा वा—

प्रथममलसैः पर्यस्ताग्रं स्थितं पृथुकेसरै-
र्विरलविरलैरन्तःपत्रैर्मनाङ्मिलितं ततः ।
तदनु वलनामात्रं किञ्चिद् व्यधायि बहिर्दलै-
र्मुकुलनविधौ वृद्धाब्जानां बभूव कदर्थना ॥ २१ ॥

**कला**—नवममर्थगुणं परिभाषते वस्त्वित्यादिना—वस्तुस्वभावस्फुटत्वम् अर्थव्यक्तिः इति ।

वस्तुस्वभावस्फुटत्वम् = भावावस्थास्पष्टत्वम्, अर्थव्यक्तिः = अर्थव्यक्ति-गुण इति ।

सूत्रार्थं विशदयति वस्तूनामित्यादिना—वस्तूनाम् = भावानाम् ( पदार्थानाम्, रत्यादिभावानाञ्च ) स्वभावस्य = स्वकीयधर्मस्य, स्फुटत्वम् = पुर इव प्रतिभासमानत्वम्, यत्, असौ, अर्थव्यक्तिः = तदाख्यो गुण इति ।

अर्थव्यक्तिमुदाहरति पृष्ठेष्वित्यादिना—छदानाम् शङ्खशकलच्छविषु पृष्ठेषु अलक्तकलोहनीभिः राजिभिः अङ्कितम्, गोरोचनाहरितबभ्रूवहिःपलाशम् कुमुदम् पल्वलस्य अम्भसि आमोदते इति ।

छदानाम् = पत्राणाम्, शङ्खशकलच्छविषु = शङ्खखण्डतुल्यकान्तिषु, पृष्ठेषु = चरमभागेषु, अलक्तकलोहिताभिः = लाक्षारसतुल्यरक्ताभिः, राजिभिः = रेखाभिः, अङ्कितम् = चिह्नितम्, गोरोचनाहरितबभ्रूवहिःपलाशम् = गोरोचनावत् हरितानि ( पलाशानि ) बभ्रूणि ( कपिशानि ) वहिःपलाशानि (वाह्यदलानि) यस्य तत्, कुमुदम् = कमलम्, पल्वलस्य = वेशन्तस्य, अम्भसि = जले, आमोदते = आमोदमुद्गिरति इति ।

उदाहरणान्तरं प्रस्तौति—प्रथममलसैरित्यादिना—प्रथमम् अलसैः पृथुकेसरैः पर्यस्ताग्रम् स्थितम् ततः विरलविरलैः अन्तःपत्रैः मनाक् मिलितम्, तदनु वहिर्दलैः वलनामात्रम् किञ्चित् व्यधायि वृद्धाब्जानाम् मुकुलनविधौ कदर्थना बभूव इति ।

प्रथमम् = पूर्वम्, अलसैः = उत्साहहीनैः, पृथुकेसरैः = स्थूलकिञ्जल्कैः, पर्यस्ताग्रम् = शिथिलशिखरम्, स्थितम् = अवसितम्, ततः = तदनन्तरम्, विरलविरलैः = अत्यन्तशिथिलैः, अन्तःपत्रैः = आभ्यन्तरदलैः, मनाक् = ईषत्, मिलितम् = संम्पृक्तम्, तदनु = तदनन्तरम्, वहिर्दलैः = वाह्यपत्रैः, वलनामात्रम् = सङ्कोचनारम्भमात्रम् किञ्चित्, व्यधायि = व्यरच्यत, इत्थम् = अनेन प्रकारेण, वृद्धाब्जानाम् = पुराणकमलानाम्, कदर्थना = क्लेशदशा, बभूवेति ।

उभयत्र लक्ष्ये लक्षणं स्पष्टम् । अत्र विपर्ययः सन्दिग्धत्वं क्लिष्टत्वञ्च ।

**प्रतिकला**—नवम अर्थगुण अर्थव्यक्ति का लक्षण करते हैं—

भाव के स्वभाव की स्पष्टता अर्थव्यक्ति है। वस्तु अर्थात् भावों के

स्वभाव की स्पष्टता—इस तरह का वर्णन जिससे ऐसा लगे कि मानों वह वस्तु सामने है, जो है वही अर्थव्यक्ति है। जैसे—

पत्तों के शङ्ख के टुकडों जैसी कान्ति वाले पीठ में लाख के रस जैसी लाल रेखाओं से अङ्कित, गोरोचन जैसे हरे एवं कपिश वर्ण के बाहरी पत्र वाला कमल पोखरे के जल में शोभित है ॥ २० ॥

अथवा जैसे—

पहले आलसी बने बड़े केसर अग्रभाग को शिथिल बना कर रहे, उसके बाद शिथिल शिथिल भीतरी पत्ते कुछ कुछ खुमच गए, उसके बाद बाहरी पत्रों ने कुछ कुछ खुमचना शुरु किया, इस तरह बूढे कमलों के खुमचने की विधि में क्लेशदशा हुई ॥ २१ ॥

**दीप्तरसत्वं कान्तिः ॥ १५ ॥**

दीप्ता रसाःश्रृङ्गारादयो यस्य स दीप्तरसः। तस्य भावो दीप्तरसत्वं यथा—

प्रेयान् सायमपाकृतः सशपथं पादानतः कान्तया
द्वित्राण्येव पदानि वासभवनात् यावन्न यात्युन्मनाः।
तावत् प्रत्युत पाणिसम्पुटलसन्नीवीनितम्बं धृतो
धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः ॥ २२ ॥

एवं रसान्तरेष्वप्युदाहार्यम्।

**कला**—दशममर्थगुणं लक्षयति दीप्तेत्यादिना—दीप्तरसत्वम् कान्तिः इति।

दीप्तरसत्वम्=उद्दीप्तश्रृङ्गारादिरसत्वम, कान्तिः=कान्तिगुण इति।

सूत्रार्थं विविङ्क्ते दीप्ता इत्यादिना—दीप्ताः=विभावानुभावसात्विकसञ्चारिभिर्व्यक्ताः, रसाः=श्रृङ्गारादयो यस्य सः दीप्तरसः, तस्य भावो दीप्तरसत्वम् कान्तिगुण इति।

उदाहरति प्रेयानित्यादिना—सायम् सशपथम् पादानतः कान्तया अपाकृतः उन्मनाः प्रेयान् वासभवनात् द्वित्राणि एव पदानि यावत् न याति तावत् प्रत्युत पाणिपल्लवलसन्नीवीनितम्बम् धावित्वा एव कृतप्रणामकम् धृतः अहो प्रेम्णः गतिः विचित्रा इति।

सायम्=सन्ध्याकाले, सशपथम्=मया नैतत्कृतमिति, पादानतः=कृत-चरणस्पर्शः, किन्तु कान्तया=प्रियया, अपाकृतः=दुत्कृतः, अत एव उन्मनाः =दुःखितः, प्रेयान्=प्रियतमः, वासभवनात्=शयनकक्षातः, द्वित्राणि=द्वे त्रीणि वा पदानि, यावत्=यावत्कालम्, न याति=गच्छति, तावत्= तत्कालमेव, प्रत्युत=तद्विपरीतमेव, पाणिपल्लवन्नसन्नीवीनितम्बकम्=कर-किसलयविलसन्नीवीपश्चाद्भागम् एव, धावित्वा=वेगेन गत्वा, कृतप्रणामकम् =विहितप्रणमनम, धृतः = गृहीतः नैव गन्तव्यमित्यपवारितः, अहो= आश्चर्यम्, प्रेम्णः=स्नेहस्य, गतिः=लीला, विचित्रा=अद्भुता इति। अत्र विप्रलम्भपूर्वकः सम्भोगश्रृङ्गार उद्दीप्तो रस इति।

एवम्=अनयैव दिशा, रसान्तरेषु=अन्यरसेषु अपि, उदाहार्यमिति।

यथा अयोगश्रृङ्गारः—

व्याहृता प्रतिवचो न सन्दधे गन्तुमैच्छदवलम्बितांशुका।
सेवते स्म शयनं पराङ्मुखी सा तथापि रतये पिनाकिनः॥

यथा च विप्रलब्धश्रृङ्गारः—

देशैरन्तरिता शतैश्च सरितामुर्वीभृतां कानने-
र्यत्नेनापि न याति लोचनपथं कान्तेति जानन्नपि।
उद्ग्रीवश्चरणार्धरुद्धवसुधः कृत्वाऽश्रुपूर्णे दृशौ
तामाशां पथिकस्तथापि किमपि ध्यात्वा चिरं तिष्ठति॥"

सम्भोगश्रृङ्गारो यथा—

किमपि किमपि मन्दं मन्दमासत्तियोगा
दविरलितकपोलं जल्पतोरक्रमेण।
सपुलकपरिरम्भव्यापृतैकैकदोष्णो-
रविदितगतयामा रात्रिरेवं व्यरंसीत्॥

दानवीरो यथा—

शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति।
तृप्तिं न पश्यामि तवापि तावत्किं भक्षणात् त्वं विरतो गरुत्मन्॥

बीभत्सो यथा—

लालां वक्त्रासवं वेत्ति मांसपिण्डौ पयोधरौ ।
मांसास्थिकूटं जघनं जनः कामग्रहातुरः ॥

रौद्रो यथा—

चञ्चद्भुजभ्रमितचण्डगदाभिघात-
सञ्चूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि भीमः ॥

हास्यो यथा—

भिक्षो मांसनिषेवणं प्रकुरुषे किन्तेन मद्यं विना
मद्यं चापि तव प्रियं प्रियमहो वाराङ्गनाभिः सह ।
वेश्याऽप्यर्थरुचिः कुतस्तव धनं द्यूतेन चौर्येण वा
चौर्यद्यूतपरिग्रहोऽपि भवतो भ्रष्टस्य कान्या गतिः ॥

करुणो यथा—

अयि जीवितनाथ जीवसीत्यभिधायोत्थितया तया पुरः ।
ददृशे पुरुषाकृतिः क्षितौ हरकोपानलभस्म केवलम् ॥

भयानको यथा—

जाताकलिकविस्मयैः किमिदमित्याकर्ण्यमाणः सुरैः
सद्यस्तम्भितकर्णतालचलनाद् दिग्दन्तिनः कम्पयन् ।
जन्तूनां जनितज्वरः स मृगयाकोलाहलः कोऽप्यभू-
द्येनेदं स्फुटतीव निर्भरभृतं ब्रह्माण्डभाण्डोदरम् ॥"

अद्भुतो यथा—

दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्धत-
टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।
द्राक्पर्याप्तकपालसंपुटमिलद्ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमसौ नाद्यापि विश्राम्यति ॥

शान्तो यथा—

कदा वाराणस्याममरतटिनीरोधसि वसन्
वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम् ।

अये गौरीनाथ त्रिपुरहर शम्भो त्रिनयन
प्रसीदेत्याक्रोशन् निमिषमिव नेष्यामि दिवसान् ॥

एवमेव भावा अप्युदाहार्याः—

**प्रतिकला**—दशवें अर्थगुण कान्ति का लक्षण करते हैं—

रसों की दीप्त अवस्था कान्ति है।

दीप्त है रस-शृङ्गार आदि जिसका वैसा दीप्तरस उसका भाव दीप्त रसत्व। जैसे—

सायंकाल में शपथपूर्वक पाँव पड़ा हुआ प्रियतम प्रिया से दुत्कार किए जाने पर अन्यमनस्क होकर वासभवन से जब दो तीन पग चला ही गया था तब ही वह उलटे ही हाथों में नीवी को लटकाती हुई प्रियतमा ने दौड़कर आकर प्रणामपूर्वक रोका गया, प्रेम की गति विचित्र होती है। इसी तरह और रसों में भी उदाहरण देख लेना चाहिए।

अत्र श्लोकाः—

गुणस्फुटत्वसाकल्यं काव्यपाकं प्रचक्षते।
चूतस्य परिणामेन स चाऽयमुपमीयते ॥ २३ ॥

**कला**—गुणेत्यादि–गुणस्फुटत्वसाकल्यम् काव्यपाकम् प्रचक्षते स च अयम् चूतस्य परिणामेन उपमीयते इति।

गुणेति=गुणानाम् ( ओजःप्रभृतीनाम् ) स्फुटत्वस्य=( प्रकटत्वस्य ) साकल्यम् ( समग्रता ) च, काव्यपाकम्=काव्यपूर्णता, प्रचक्षते=कथ्यते, स तादृशः, च, अयम्=काव्यपाकः, चूतस्य=आम्रस्य, परिणामेन=परिपाकेन, उपमीयते=उपमारूपेण स्थाप्यते इति ॥२३॥

**प्रतिकला**—गुणों की प्रकटता एवं पूर्णता ही काव्य का पाक है और इसकी आम के परिपाक से उपमा दी जाती है ॥२४॥

सुप्तिङ्संस्कारसारं यत् क्लिष्टवस्तुगुणं भवेत्।
काव्यं वृन्ताकपाकं स्याज्जुगुप्सन्ते जनास्ततः ॥ २४ ॥

**कला**—सुप्तिङित्यादि—यत् सुप्तिङ्संस्कारसारम्, क्लिष्टवस्तुगुणम् काव्यम् भवेत् तत् वृन्ताकपाकम् स्यात्, ततः जनाः जुगुप्सन्ते इति।

यत् सुप्तिङ्संस्कारसारम्=सुप्तिङः संस्कारः ( प्रकृतिप्रत्यययोगः )

एव सार: ( रहस्यम् ) यस्य तत्, क्लिष्टवस्तुगुणम् = अस्फुटार्थगुणम्, यत् भवेत् तत् काव्यम्, वृन्ताकपाकम् = वार्ताकपरिणाम:, स्यात्, तत: = तस्मात्, जना: = साधारणमनुष्या: अपि, जुगुप्सन्ते = निन्दन्ति–किमुत कवय इति ।२४।

**प्रतिकला**—केवल सुप्, तिङ् प्रत्ययों एवं प्रकृति का मात्र सार वाला एवं क्लिष्ट अर्थ गुण वाला जो काव्य है वह वातार्क पाक के समान है और सब जनों से त्याज्य है ।।२४।।

गुणानां दशतामुक्तो यस्यार्थस्तदपार्थकम् ।
दाडिमानि दशेत्यादि न विचारक्षमं वच: ।। २५ ।।

इति श्रीपण्डितवरवामनविरचितकाव्यालङ्कारसूत्रेषु
गुणविवेचने तृतीयेऽधिकरणे द्वितीयोऽध्याय: ।
समाप्तं चेदं गुणविवेचनं तृतीयमधिकरणम् ।

---

**कला**—गुणानामित्यादि–यस्य अर्थ गुणानां दशतामुक्त: तत्, अपार्थकम् दश दाडिमानि इत्यादि वच: न विचारक्षमम् इति ।

यस्य = प्रबन्धस्य, अर्थ: = पदार्थ: गुणानाम् = ओज:प्रभृतीनाम्, दशतामुक्त: = दशप्रकाररहित: = गुणविरहित इत्याशय:, तत्, अपार्थकम् = निरर्थकं व्यर्थमेव । दश दाडिमानि इत्यादि = दश दाडिमानि; षडपूपा:, कुण्डमजाजिनम्, पललपिण्ड इति वच: = कथनम्, न विचारयोग्यम् = विचारानर्हम् भवति इति ।

इतिश्रीविद्वद्वरवामनाचार्यविरचितकाव्यालङ्कारसूत्राणां सवृत्तीनां
लोकमणिविरचितायां कलाव्याख्यायां गुणविवेचने
तृतीयेऽधिकरणे द्वितीयोऽध्याय: ।

---

काव्यालङ्कारसूत्राणां सवृत्तीनां यथातथम् ।
रचिता लोकमणिना कलाख्या विवृति: शुभा ।। १ ।।
सूत्रकारो वृत्तिकारो व्याख्याकारश्च वामन: ।
नाम्नैव पूर्वौ द्वौ तत्र तृतीयोऽल्पमनीषया ।। २ ।।

टिप्पण्येषा मयाऽवद्धा बालव्युत्पत्तिहेतवे ।
विशेषप्रतिपत्त्यर्थं कामधेनुर्निषेव्यताम् ॥

इति शम् ।

**प्रतिकला**——जिस काव्य का अर्थ दश प्रकार के गुणों से रहित है वह एक दम व्यर्थ है। दश दाडिमादि वचन विचारयोग्य नहीं होते ॥ २५ ॥

इस प्रकार श्री वामनाचार्य प्रणीत काव्यालङ्कारसूत्र की प्रतिकला
व्याख्या में गुण विवेचन नामक तीसरे अधिकरण में
दूसरा अध्याय समाप्त हुआ।

—: ० :—

यह व्याख्या की गई है छात्रों के हित के लिए, विशेष जानना हो तो कामधेनु ही देखिए।

## नवीन प्रकाशन

स्वप्नवासवदत्तारहस्य । ( प्रश्नोत्तरी : गाईड ) । अशोकचन्द्र गौड़ शास्त्री — १२-००

चन्द्रालोक-चन्द्रिका । (चन्द्रालोक-प्रश्नोत्तरी) । पं० श्रीहरेकान्तमिश्र — ८-००

चम्पूरामायणम् । बालकाण्ड । 'कला'-'प्रतिकला' संस्कृत हिन्दी व्याख्या सहित । व्याख्याकार-श्री लोकमणि दाहाल — ८-००

मुद्राराक्षस नाटकम् । विशाखदत्त । भावबोधिनी संस्कृत-हिन्दी व्याख्योपेतम् । व्याख्याकार श्री पं० कनकलाल ठक्कुर, भूमिका लेखक आचार्य शेषराज शर्मा रेग्मी — १६-००

विक्रमाङ्कदेव चरितम् । बिल्हण 'चन्द्रकला' संस्कृत-हिन्दी व्याख्योपेतम् । व्याख्याकार आचार्य श्रीशेषराज शर्मा रेग्मी । प्रथम सर्ग — ६-००

मूलरामायण । सान्वय 'इन्दुमती' सं० हिन्दी व्याख्योपेतम् । व्याख्याकार श्री पं० हरेकान्त मिश्र साहित्याचार्य — २-५०

अलङ्कारसारमञ्जरी । 'इन्दुमती' सं० हिन्दी व्याख्योपेता । व्याख्याकार पं० हरेकान्त मिश्र. साहित्याचार्य — २-५०

मध्यमव्यायोग । 'कला' प्रतिकला' संस्कृत-हिन्दी-व्याख्योपेतः । संस्कर्ता-आचार्य श्रीशेषराजशर्मा रेग्मी, व्याख्याकार— श्रीलोकमणि दाहाल — ५-००

संस्कृतसाहित्य का इतिहास डा० राजवंशसहाय 'हीरा' — ११-००

अभिज्ञानशाकुन्तलम् । पं० नवलकिशोरकर शर्मा कृत 'किशोरकेलि' संस्कृत तथा पं० रामतेज पाण्डेय कृत 'रुचिरा' हिन्दी व्याख्या, पं० कान्तानाथ शास्त्री कृत परीक्षोपयोगीपद्यालोचन, भूमिका नोट्स विभूषित — २५-००

स्वप्नवासवदत्तम् । भासकृतम् । पं० अनन्तरामशास्त्री वेतालकृत 'प्रबोधिनी' सं० तथा पं० जगन्नाथ शास्त्री होशिंग कृत 'प्रकाश' हिन्दीटीका सहित भूमिका लेखक-प्रो० कान्तानाथशास्त्री तैलङ्ग — १२-००

---

ग्रन्थ प्राप्ति—चौखम्बा संस्कृत पुस्तकालय, कचौड़ी गली, वाराणसी ।